ISBN : 978-81-936460-7-6

# आम्नायहैमवती

## तृतीयोऽङ्कः-2019

(वैदिकज्ञानविज्ञानसम्भृता मूल्याङ्किता राष्ट्रियशोधपत्रविशेषाङ्कः)

प्रधानसम्पादकः
प्रो. के.बी. सुब्बरायुडुः
प्राचार्यः

सम्पादकः
डॉ. शैलेन्द्रप्रसादउनियालः



वेद विभागः
केन्द्रीयसंस्कृतविश्वविद्यालयः
(संसदः अधिनियमेन स्थापितः, भारतसर्वकारस्य शिक्षामन्त्रालयाधीनः)
श्रीरघुनाथकीर्तिपरिसरः, देवप्रयागः, उत्तराखण्डः

ISBN : 978-81-936460-7-6

# आम्नायहैमवती

द्वितीयोऽङ्कः - 2019

( वैदिकज्ञानविज्ञानसम्भृता मूल्याङ्किता राष्ट्रियशोधपत्रविशेषाङ्कः )

प्रधानसम्पादकः

**प्रो. के.बी. सुब्बरायुडुः**

प्राचार्यः

सम्पादकः

**डॉ. शैलेन्द्रप्रसादउनियालः**



**वेदविभागः**

**केन्द्रीयसंस्कृतविश्वविद्यालयः**

( संसदः अधिनियमेन स्थापितः, भारतसर्वकारस्य शिक्षामन्त्रालयाधीनः )

**श्रीरघुनाथकीर्तिपरिसरः, देवप्रयागः**

**पौडीगढवालः, उत्तराखण्डः - 249301**

## ।। समर्पणम् ।।

पुलवामास्थले वीरगतिं प्राप्तवद्भ्यः
सैनिकाधिकार्य्यादिभ्यः सादरं
श्रद्धाञ्जलिः समर्प्यते

## ॥राष्ट्ररक्षिकासेनाषट्पदीदीपिका॥

पूलवामास्थले दुर्घटनानले दुष्टजीवैः कृतं कृत्यमेनोयुतम्।
राष्ट्रसेवा हि धर्मो वरो वर्त्तते तेषु पादेषु श्रद्धाञ्जलिर्दीयते॥1॥

वीरताया गतिं प्राप्नुवँस्ते जनाःस्वर्गतिं देशसेवाञ्च लब्धासनाः।
राष्ट्रदेवेन ते स्वागतीवाचया सत्कृताःस्वागतं स्वागतं सैनिकाः॥2॥

सास्ति माता सुपूज्या जगज्जीवने यौवनं यद्गतं तस्य संयोजने।
स्तन्यताधन्यतां सङ्गताततिस्त्रियो यन्निपीतेन बालोऽभवत्सैनिकः॥3॥

वार्यतां दुष्कृतान् सर्वदा सज्जनःचेद्भवेत्किन्नु नःपारिपार्श्वी नरः।
कर्त्तनं यद्दुराङ्गस्य जीवैस्सदा कार्यते तद्धितं मन्यते सर्वथा॥4॥

वोभवीतीह वीथौ यदा कल्कनं निग्रहं दुर्जनानां तदा चेद्भवेद्।
सर्वदा नाश्रयो कैश्चनापीह वै दाप्यते राष्ट्रसेवा शुभा सौख्यदा॥5॥

मानवो मानवान् पातु वै सर्वथा सज्जनाःसक्रियाश्चेत्कथं दीनता।
देशसेवा तु येनेह प्राणार्पणैःरक्षिता वै वयं वैभवान् तान्स्मरे॥6॥

-डॉ शैलेन्द्रप्रसाद उनियालः



# शुभाशंसनम्

## ''आम्नायहैमवती प्रसरतु''

राष्ट्रियसंस्कृतसंस्थानस्य श्रीरघुनाथकीर्तिपरिसरस्थेन वेदविभागेन विभागीय शोध सङ्गोष्ठीशोधपत्रिका ''आम्नायहैमवती''ति नाम्ना विशेषाङ्कः प्रकाश्यते। वर्षेऽस्मिन् फरवरीमासस्य 18–19, दिनाङ्कयोः द्विदिवसीयराष्ट्रियसङ्गोष्ठ्यां नैके विद्वांसः स्वकीयवैदुष्यपूर्णानि शोधपत्राणि प्रापठन् तानि शोधपत्राणि सङ्कलय्य सामाजिकलाभाय छात्राणां हिताय च प्रकाश्यन्ते।

वेदविभागस्य तृतीयोऽङ्कः श्रीरघुनाथकीर्तिपरिसरस्य वैदिकसंस्कृतिकीर्तिपताकां व्योम्नि चन्द्रतारकवत् समुन्नतस्थानं प्रापयेत् तथा च गवेषकाणां वैदिकच्छात्राणां संस्कृतानुरागिणां च समाह्लादनकारकः भवेदिति मे द्रढीयान् विश्वासः।

अस्याङ्कस्य प्रकाशनाय सम्पादकाय वेदविभागाध्यक्षाय डॉ. शैलेन्द्रप्रसाद उनियालवर्याय अभिनन्दनपुरस्सरं भूरिशस्साधुवादाः वितीर्यन्ते। डॉ. शैलेन्द्रप्रसाद उनियालमहोदयेन प्रारब्धोऽयं वेदविभागः न केवलं देवभूमौ देवप्रयागे, अपितु निखिलेऽपि विश्वे देववाण्या वेदगङ्गां प्रसारयिष्यत्विति भगवन्तं श्रीरघुनाथं वेदमातरं च प्रार्थये।

इत्थम्

( परिसरः प्राचार्यः)

के. बी. सुब्बरायुडुः

# सम्पादकीयम्

अयि शारदाचरणाम्बुजसमुपासका: शिष्यशासका: विदन्त्येव भवन्तोभवन्त: यद्वेदा अस्माकं भारतीयानां परमप्रमाणभूता: ज्ञानशेवधित्वेन राराजन्ते। तेषु वेदवेदाङ्गशास्त्रेषु देवताया: कीदृगिति निर्णय: अस्यां विद्वत्सङ्गोष्ठ्यां विविधविचारचातुर्यविनिर्जितसकलवादि-वृन्दोपरि विराजमानै: भासमानै: समानै: विद्वद्भि: "वेदेषु देवता-वाद:" व्याख्यास्यते।

वेदेषुदेवतावाद: इत्येव कथमिति जिज्ञासाया: शमने मया चिन्तितं यज्जना: मंत्रस्य देवतामविज्ञाय मंत्राञ्जपन्ति चेतत्र विगुणतया फलहानि: श्रमवैयर्थ्यापत्तिर्जायते एवं मा भूयात्। जना: स्वलक्ष्ये सफला भवेयु:। तथा च समाजेऽधुना भ्रान्तिर्विद्यते यत् कति देवता: सन्ति इत्यस्योत्तरं वेदा: प्रामुख्येन निर्णयं दास्यन्तीति मत्वा विषयोऽयं केन्द्रीकृत:, यतोहि:

**अविज्ञाय ऋषिं छन्दोदैवतं योगमेवच।**
**योऽध्यापयेज्जपेद्वापि पापीयाञ्जायते तु स:॥**

तथा चाह वृहद्देवताकार: शौनक:-

**देदितव्यं दैवतं हि मन्त्रे मन्त्रे प्रयत्नत:।**
**दैवतज्ञो हि मन्त्राणां तदर्थमवगच्छति॥** बृहद्देवता-2

**नहि कश्चिदविज्ञाय याथातथ्येन दैवतम्।**
**लौक्यानां वैदिकानां वा कर्मणां फलमश्नुते॥** बृहद्देवता-4

तत्रैव एकविंशतितमे श्लोके शौनको मनुते यत् तदेव कर्म सर्वथा साफल्यं याति यस्मिन् कर्त्तरि देवताया: परिज्ञानं भवति यतोहि परिज्ञानानन्तरमेव मन्त्रान् कर्मसु योजयति ज्ञाता।

विशदेन चात्र व्याख्यातं विद्वद्भि: तेन 'वादे वादे जायते तत्वबोध:' इति वैयाकरणा: समानन्त्येव। येन समञ्जसा देवतावादस्य परिज्ञानेन समाजस्य वेदानुरागिणा-मनुसन्धित्सूनाञ्च महाँल्लाभो भविष्यतीति धिया प्रकल्पितोयं विषय:। राष्ट्रियसंस्कृतसंस्थानस्य श्री रघुनाथकीर्तिपरिसरस्य वेदविभागेन तपस् (माघ) मासस्य चतुर्दशी-पूर्णिमयो: (फरवरी 18-19 दिनाङ्कयो 2019)।

राष्ट्रियावैदिकसङ्गोष्ठी समायोजिता तथा चात्रैव "चातुर्मास्य यागमहत्त्वम्" इति विषयमवलम्ब्य विशिष्टव्याख्यानं श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली, समविश्वविद्यालयस्य पौरोहित्य विभागाध्यक्षै: प्रो. रामराज उपाध्याय महोदयै: समाख्यातम्।

नैकैः विद्वद्भिः "वेदेषु देवतावादः" इति मुख्यविषये तथोपविषयेषु नाना शोधपत्राणि पठितानि तान्यत्र प्रकाशनयोग्यानि प्रकाश्यन्ते येन संस्कृतविदुषामनुरागिणां शोधच्छात्राणां पाठकानां वा महाँल्लाभो सेत्स्यति। एतस्मिन् पुनीत कार्ये प्रत्यक्षाप्रत्यक्षतया सहाय्यं कृतवद्भ्या धन्यवाद पुरस्सरम् "आम्नायहैमवती" शोधपत्रिका आभारतं ज्ञानवारिधारया पावत्विति श्रीरघुनाथं भगवतीं विष्णुपदीं च प्रार्थये।

**गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः।**
**क्षामयन्तु गुरवोज्येष्ठाः समादधतु सज्जनाः॥**

**-डॉ. शैलेन्द्रप्रसादउनियालः**

(सम्पादकः)

# विषयानुक्रमणिका



## दैवीवाक्-काण्डः



## देवनागरी काण्ड

## आंग्ल-काण्डः





# पूर्वोत्तरमीमांसादर्शनयोर्देवतातत्त्वम्

**डॉ. रामानुज उपाध्याय**

(एसोसिएट प्रोफ़ेसर) (वेदविभाग)

श्रीलालबहादुरशास्त्रीराष्ट्रीयसंस्कृतविद्यापीठ, नई दिल्ली

अस्मिन् जगति समेऽपि प्राणिनः आनन्दापरपर्यायं सुखं समीहमाना दृश्यन्ते इति नास्ति तिरोहितं विज्ञैः। इत्यत्र जीवस्य ईश्वरांशत्वमेव प्रामुख्यं भजते। ईश्वरो हि सच्चिदानन्दमयः-

**सच्चिदानन्दरूपाय विश्वोत्पत्यादिहेतवे।**[1]
**त्रापत्रयविनाशाय श्रीकृष्णाय वयं नुमः।।**

अस्य च अंशोऽयं जीवः-

**ईश्वर अंश जीव अविनाशी।**
**चेतन अमल सहज सुखराशी।।**[2]

इति रामायणीयं वचनमिहप्रमाणतामुपैति।

अस्माकं सर्वाणि शास्त्राणि अपि ऐकान्तिक-आत्यन्तिकया च दुःखनिवृत्तिपूर्वकं सुखावाप्तये सातत्येन प्रवृत्तानि सन्तीति तत्तत्शास्त्रावलोकनेन स्पष्टतया विज्ञायते। तदिदं सुखं कथं प्राप्येत्? इति जिज्ञासायां "सुखे हि हेतुः धर्मः। तथोदीरितं भगवताव्यासेन-प्राणिनां च सुखप्राप्तये धर्मो विधीयते दुःखपरिहाराय चाधर्मः प्रतिषिध्यते।[3] आचार्य चाणक्येनापि-सुखस्य मूलं धर्मः इति उदीरयामास। पुनश्चात्र जिज्ञास्यते को हि धर्मः? यश्च सुखमूलकः। तत्र धर्मप्रतिपादकं शास्त्रं मीमांसाशास्त्रं, यतः शास्त्रस्यास्य धर्मप्रतिपादनमेवैकं परमंप्रयोजनम्।" तथाचोक्तं श्लोकवार्तिके "धर्माख्यं विषयं वक्तुं मीमान्सायाः प्रयोजनम्"।[4] धर्मस्य एतादृशं प्रतिपादनं नान्यत्र क्वचिदन्येषु शास्त्रेषु उपलभ्यते।

---

1. श्रीमद्भागवत्-1-1
2. श्रीरामचरितमानस उत्तरकाण्ड116
3. ब्रह्मसूत्रशाङ्करभाष्य 1-3-30
4. श्लोकवार्तिक-11

तेनादौ मीमान्सानुरोधेन अतिप्रसिदध्त्वात्। अर्थसंग्रहकारस्य लक्षणमिहोपस्थाप्यते। को धर्म:? किं तस्य लक्षणं उच्यते यागादिरेव धर्म:।[1] अत्र आदि पदेन दान होमादयो "द्रव्यगुणादयश्च ग्राह्या भवन्ति इति सारविवेचनीकारस्य आशय:।" अस्येदंतात्पर्यं 'श्रुति: श्रेयस्करत्वेन यं धर्मं ब्रवीति स अस्माकं धर्म:। तथा च श्रुति:' "तानि धर्माणि प्रामिान्यासन।" "एवं यागादीनामेवधर्मत्त्वमिति शास्त्रस्यास्य सिद्धान्त:। अतएवाग्रे" वेदप्रतिपाद्य: प्रयोजनवदर्थो धर्म: उच्यते। अर्थात् वेदप्रतिपाद्यत्वे सति प्रयोजनवत्वे सति अर्थत्वं धर्मस्य लक्षणम्। लक्षणमिदं यागादौ समन्वेति। तेन यागस्य वेदविहितत्वात् धर्मत्वं सिध्यति। पुनर्जिज्ञासते को हि यज्ञ:? उच्यते "यज्ञस्य द्वे रूपे द्रव्यम् देवता च। त्यज्यमानद्रव्योद्देश्यत्वं देवतात्वम्। अर्थात् विहितदेवतामुद्दिश्य विहितद्रव्यस्य त्यागो याग इति।[2] द्रव्यस्य प्रत्यक्षत्वात् विधानं तु सुतरां समवलोक्यते परञ्च देवतानाम् अलौकिकत्वात प्रत्यक्षतया दर्शनं न जायते, तर्हि अत्र देवतानां विषये जिज्ञासा भवति। एतत् समाधानार्थम् आचार्य यास्कप्रोक्तं देवतालक्षणम् उच्यते। आचार्ययास्केन निरुक्ते देव शब्द: चतुर्धा व्युत्पादित:– "देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवति।"[3] एषु दीपनद्योतन द्युस्थानरूपास्त्रयोव्युत्पत्तय: दिवुधातोरर्थमेवानुसरन्ति, यत: दीप्तिद्युतिद्युलोकानां संबन्ध: कान्तिमता देवेन सह संघटते, किन्तु दा धातुना देव शब्दस्य निर्वचनं विशेषार्थं व्यनक्ति। अत्र यजमान: यज्ञानुष्ठानेन देवान् भावयति, देवाश्य तस्मै स्वर्गादिभोग्यवस्तूनि प्रददति। सैषा प्रदानक्रिया यत्र विद्यते स देव इति बोध्य:। निरुक्तकारमते देवा विग्रहवती भवति। पश्चाच्च "अपि वा उभयविधा स्यु:" इत्यनेन देवतानां सगुणनिर्गुण भेदेन उभयरूपत्त्वं तैश्च सप्रमाणं साधितम्।

इदानीं पूर्वमीमांसानुरोधेन देवतास्वरूपं पुरस्क्रियते। महर्षिजैमिनिना प्रवर्तितमिदं शास्त्रं "द्वादशलक्षणीति पदेनाऽपि अभिधीयते। एषां मते शब्दमयी देवता एव स्वीकार्यावर्तते। इन्द्राय स्वाहा, अग्नये स्वाहा इत्यादि वाक्येषु चतुर्थ्यन्तपदात्मको देव:। कर्मणा एवं फलप्राप्ति:न तु कश्चन फलप्रदोदेवविशेष:। तथोदीरितं शास्त्रदीपिकायां"– "फलदायित्वेऽपि न देवताया: प्रयोजकत्वं नापि प्राधान्यम्।" अत्र विचार्यते किं योगोदेवताराधनार्थ: अस्याश्चाराधीताया: फलं? उत अपूर्वद्वारं यागस्य साधनत्वम् इति। अस्य समाधाने आचार्यमिश्रेणैवं प्रोक्तं:-

**इन्द्रादे: संप्रदानत्वात् कर्मणोऽपि प्रधानता।**
**याग: पूजा तदंगं स्यात् अतिथे र्भोजनं यथा।।**

---

1. अर्थसंग्रह पृष्ठ-10
2. मीमान्सान्यायप्रकाश पृष्ट-226
3. निरुक्त दैवतकाण्ड 7-4

**यागश्च साध्यरूपत्वात् साधनत्वेन देवताम्।**
**गृह्णाति सिद्धरूपा च देवता तस्य साधनम्।।**[1]

अर्थात् यागश्च साध्यः देवता च साधनरूपा।

प्रीयमाणोऽपि अतिथिः आराधयित्रे स्वर्गादि न प्रददाति यद्यपि देवता विग्रहवती भुक्त्वा तृप्यति प्रसीदति च तथापि यागादेव फलप्राप्तिः। यद्यपि देवता विग्रहवती तथापि सा अनित्या स्यात्। ततश्च नित्यवेदविषयत्वं न स्यात्। न हि तस्याः प्रसादात् स्वर्गादिफल मुपलभ्यते। एतत्तु कर्मणः एव फलं गम्यते। मन्दधियस्तु श्रद्धालवः तात्पर्यमजानाना भ्राम्यन्तु नाम।

एवं पूर्वमीमांसादर्शने शब्दमयत्वं देवतात्वं स्वीकृतमस्ति। देवताबलाबल निरूपिणे इदमप्युक्तं—

**तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः।**
**देवताया विधिस्तत्र दुर्बलं तु परं परम्।।**[2]

पुनरत्र जिज्ञास्यते—यागस्तु क्षणिकः किं विनष्टस्यापि यागस्य स्वर्गोत्पादनमुचितं? अस्य समाधाने पूर्वाचार्यैः इत्थं प्रक्रिया दर्शिता। प्रथमं तावत् फलवाक्येन कर्मणः फलसाधनता बोध्यते—यागेन स्वर्गं कुर्यात? कथं विनश्वरेण यागेन फलं कर्तव्यं? अपूर्वं कृत्वा इत्युच्यते। कथमपूर्व विधीयते? यागानुष्ठानप्रकार प्रक्रियाद्वारा। तच्चपूर्वं दर्शपूर्णमासयोरनेकविधम्। फलापूर्वं, समुदायापूर्वं, उत्पत्यपूर्वं अङ्गापूर्वमिति क्रमेण। तथोदीरितं माधवाचारयेण-

**क्षणिकस्य विनष्टस्य स्वर्गहेतुत्वकल्पनम्।**
**विरुद्ध्मान्तरेणातः श्रेयोऽपूर्वस्य कल्पनम्।।**
**अवान्तरव्यापृतिर्वा शक्तिर्वा यागजोच्यते।**
**अपूर्वमिति तद्भेदः प्रकियातोऽवागम्यताम्।।**

एवमिह फलप्राप्तये अपूर्वस्य कल्पनं श्रेयः परञ्च देवादीनां फलदातृत्वं एतैः न स्वीक्रियते।

अत्र इदमप्यवधेयं यत् केचन आचार्याः देवानां विग्रहत्वं न स्वीकुर्वन्ति यथा शबरस्वामी, पार्थसारथिः मिश्रादयः। कुमारिलभट प्रभृतयस्तु विग्रहत्वं स्वीकृत्य अपि अनित्यत्वेन स्वीकृतम्।

---

1. शास्त्रदीपिका देवताधिकरण
2. तन्त्रवार्तिक 2-2-9

**यागादेव फलं तद्धि शक्तिद्वारेण सिध्यति**
**सूक्ष्मशक्त्यात्मकं वा तत्फलमेवोपजायते।।**[1]

अर्थात् भाट्टमीमान्सका: सूक्ष्मशक्तित्वेन देवतां कुर्वन्ति। यदि शरीरधारित्वमेषां स्वीक्रियते चेत् एकस्मिन्नेव काले समायोजितेषु बहुषुयागेषु गमनं दु:शकमिति। तस्मात् सूक्ष्मशक्तित्वेन स्वीकरणीयम् इति एषां मतम्।

उत्तरमीमांसायां (वेदान्तदर्शने) तु पूर्वमीमांसकानां देवताविषयकं सर्वस्वरूपम् पूर्वपक्षेण प्रस्तुत्य यथाविधि यथाप्रमाणंच खण्डयित्वा अष्टभि: सूत्रै: देवताया: फलदातृत्वं विग्रहादिमत्वं च सप्रमाणं भगवताव्यासेन सिद्धान्तितं। तत्र प्रथमं सूत्रमस्ति–"तदुर्पयपि बादरायण: सम्भवात्।"[2] सूत्रस्यास्य व्यख्यानावसरे भगवात्पादैरेवमभाणि–मनुष्याणामुपरिष्टात् ये देवादय: सन्ति सामर्थ्यमपि तेषां भवति। मन्त्रार्थवादेतिहासपुराणलोकेभ्योविग्रहत्वाद्यवगमात्। अतएव विद्याग्रहणार्थमिन्द्रस्य ब्रह्मचर्यत्वं छान्दोग्योपनिषदि एवं श्रूयते–एक शतं ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवास।[3] एतच्च इन्द्रस्य विग्रहवत्वे सत्येव संघटते। बहुषु यागेषु युगपदेकस्येन्द्रस्य स्वरूपसन्निधानतानुपपत्तेरिति चेत् नायमस्ति विरोध:– एकस्यापि देवतात्मन: युगपदनेकस्वप प्रतिपत्ति: संभवति। "इन्द्रो मायाभि:" पुरुरूप ईयते। स्मृतिरपि–आत्मनो वै शरीराणि बहूनि भरतर्षभ। योगी कुर्याद् बलं प्राप्य तैश्च सर्वैर्महीं चरेत।[4] एवं यदि योगिनामपियुगपदनेक शरीर धारित्वमस्ति तर्हि किं वक्तव्यमाजानसिद्धानां देवानाम्। अनेकरूपप्रतिपत्ति सम्भवाच्च। एकैका देवता बहुभीरूपैरात्मानं प्रविभज्य बहुषु यागेषु युगपदंगभावं गच्छतीति। परैश्च न दृश्यते अन्तर्धानादिक्रियायोगात्। यथा बहुभिर्नमस्कुर्वाणौ ब्राह्मणौ युगपन्नमस्क्रियते। तद्वत् यागस्य विग्रहवतीमप्येकां देवतामुद्दिश्य बहव: स्वं स्वं द्रव्यं युगपत् परित्यक्षन्तीति विग्रहवत्वेऽपि देवतानां न किञ्चित् कर्मणि विरुध्यते।

अपि च विधिभिरेवेन्द्रादि दैवत्यानि हवींषि चोदयद्भि: अपेक्षितमिन्द्रदीनां स्वरूपम्। न हि स्वरूपरहिता इन्द्रादयश्च एतस्य अरोपयितुं शक्यन्ते नचैतस्यानारूढायै तस्यै तस्यै देवतायै हवि:प्रदातुं शक्यते। तथा च उक्तम् ऐतरेय ब्राह्मणे–यस्यै यस्यै देवतायै हविर्गृहीतं स्यात् तां ध्यायेत वषट्करिष्यन्।[5] एतत्तु नहि शब्दमात्रमर्थस्वरूपे संभवति शब्दार्थयोरभेदात्। भवति हि अस्माकमप्रत्यक्षमपि चिरन्तनानां प्रत्यक्षम्।

---

1. जैमिनीयन्यायमाला 2–1–8–10
2. तन्त्रवार्तिक 1–20
3. ब्रह्मसूत्र 1–3–8–26
4. छान्दोग्योपनिषद् 8–11–3
5. ब्रह्मसूत्रम् भामती 1–3–8

तथा च व्यासादयो देवादिभिः प्रत्यक्षं व्यवहरन्तीति स्मर्यते–

**विग्रहो हविषां भोगः ऐश्वर्यं च प्रसन्नता।**
**फलदातृत्वमित्येतत् पञ्चकं विग्रहादिकम्।।**[1]

अर्थात् विग्रहः हविः स्वीकारः तद्भोजनेन तृप्तिः प्रसादः फलदातृत्वञ्च चेतनस्यैव पञ्चकमुचितं नतु शब्दात्मकजडदेवताभ्यः। तस्मात् उत्तरमीमांसाशास्त्रानुरोधेन देवतानां विग्रहत्वं सगुणस्वरूपत्वं फलप्रदातृत्त्वञ्च सर्वथा सिद्धं भवति तथा च श्रुतिरप्याह–

**देहि मे ददामिते निमेधेहि नितेदधे।**
**निहारञ्च हरासिमे निहारन्निहराणि ते स्वाहा।।**[2]

अत्र इन्द्रोदेवता ब्रूते–

हे यजमान! त्वं मे हवि देहि अपेक्षितं पश्चात् तुभ्यं ददामि। मे निधेहि ते निदधे निहारञ्च–मूल्येन यज्ञफलं मे प्रयच्छ। ते निहारं मूल्यभूतं हविः तुभ्यं नितरां समर्पयामि स्वाहा।

एवं प्रकारेण बहूनि श्रुतिवाक्यानि तत्तत्स्थानेषु प्रोक्तानि सन्ति–विस्तरभयात् नेह प्रस्तूयन्ते।

तदित्थं पूर्वोत्तरमीमांसादर्शनानुरोधेन देवतातत्वं यथामतीह विमृष्ट्मितिशम्।



1. ब्रह्मसूत्र भामती पृष्ट 256
2. शुक्ल यजुर्वेद संहिता 3–50

# वेदाङ्गानां प्रासङ्गिकता

**विद्यावाचस्पतिः डॉ० सुन्दरनारायणझाः**
सहायक-आचार्यः, वेदविभागः,
श्रीला.ब.शा.रा.संस्कृतविद्यापीठम्, नवदेहली

**अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा।**
**आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः।।**[1]

**युगान्तेऽन्तर्हितान्वेदान् सेतिहासान्महर्षयः।**
**लेभिरे तपसा पूर्वमनुज्ञाता स्वयम्भुवा।।**[2]

इत्याभ्यां स्मार्त्तवचनाभ्यां वेदानामनादित्वं नित्यत्वं वाग्रूपत्वं सेतिहासप्रवृत्तित्वं महर्षिभिस्तपसा प्राप्यत्वञ्च स्पष्टमेव भवति। स चायं वेदशब्दो विद्-धातोर्घञा निष्पद्यते। तत्राद्युदात्तो वेदशब्दः कुशमुष्टिवाची, अन्तोदात्तो वेदशब्दश्च ज्ञानवाचीति सर्वे विद्वांसो जानन्त्येव। तेन सर्वज्ञानविज्ञानानां स्रोतांसि वेदा एव सन्तीत्युक्तं भगवता मनुना- **सर्वज्ञानमयो हि सः**[3]। वेदेषु मन्त्राः सन्ति, मन्त्राणां प्रयोगा यागेषु भवन्ति। तदुक्तं कृष्णयज्वना मीमांसापरिभाषायां- **प्रयोगकालीनार्थस्मरणहेतुतया मन्त्राणामुपयोग इति वक्ष्यते।** मीमांसकैश्चान्यैः **प्रयोगसमवेतार्थस्मारकाः मन्त्रा** इति मन्त्रलक्षणं प्रस्तुतम्। कात्यायनेन मुनिना स्वकीये श्रौतसूत्रे- **ऋचो यजूंषि सामानि निगदा मन्त्रा**[4] इत्युक्तम्। तेषां मन्त्राणामर्थज्ञाने यानि शास्त्राणि सहायकानि भवन्ति तान्येव वेदानामङ्गानीति कथ्यन्ते। वेदस्याङ्गं वेदाङ्गमिति सामासिकार्थः।

अङ्गशब्दस्य व्यूत्पत्तिलभ्योऽर्थो भवति- **अङ्ग्यन्ते ज्ञायन्ते अमीभिरित्यङ्गम्।** अर्थात् येन साधनेन कस्यापि पदार्थस्य तत्त्वस्य वा ज्ञानमस्माभिः क्रियते तत्साधनमेव अङ्गमित्युच्यते। अङ्गानां पर्यायभूतः शब्दोऽस्ति इन्द्रियमिति। इन्द्रियाण्यस्माकं शरीरे दश प्रोक्तानि पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि च। एभिर्ज्ञानकर्मोभयेन्द्रियैः वयं ज्ञानं कुर्मः। ज्ञानस्य ज्ञानकरणस्य साधनान्येतानीन्द्रियाण्यस्माकं शरीरे यथा तिष्ठन्ति तथैव

1. महाभारते, शान्तिपर्वणि- 244/55
2. स्मृतिवचनम्- उल्लेखः ऐतरेयब्राह्मणे सायणभाष्ये उपोद्घाते।
3. मनु-2/7
4. का.श्रौ.सू.- 1/3/1

वेदशरीरे वेदाङ्गानि तिष्ठन्ति। अर्थादेतेषां हस्तपादादीनामङ्गानां सहायेन यथा वयं गमन-ग्रहण-स्पर्शन-चर्वन-उत्सर्जन-घ्राणन-दर्शन-श्रवण-आस्वादनादिकं कर्म सम्पादयामः एवमेव वेदा अपि स्वीयं कर्म स्वेनैवाङ्गेन सम्पादयन्ति। अतो वेदाङ्गानां महन्महत्त्वमस्तीत्यत्र नास्ति काचित् विचिकित्सा।

भगवता पाणिनिना स्वकीयायां शिक्षायामेवमुक्तम्-

**छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।**
**ज्योतिषामयनञ्चक्षुर्निरुक्तं श्रोत्रमुच्यते॥**

**शिक्षाघ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।**
**तस्मात्साङ्गमधीत्यैव ब्रह्मलोक महीयते।**[1]।

**शिक्षाकल्पो व्याकरणं निरुक्तं छन्दसां चयः।**
**ज्योतिषामनञ्चैव वेदाङ्गानि षडेव तु॥**

षण्णामप्येतेषां वेदाङ्गानामुल्लेखो गोपथब्राह्मण-उपनिषद्-बौधायनधर्मसूत्र-गौतमधर्मसूत्र-रामायणादिषु प्राचीनग्रन्थेषु समुपलभ्यते। एतेन तेषां पुरातनतरत्वं सिद्ध्यत्येव नात्र काचिद्विमतिः केषामपि।

परमाधुनिकानामितिहासकाराणां कथनमिदमस्ति यत् षण्णामपि वेदाङ्गानां निर्माणं वैदिकयुगस्योत्तरार्द्धे समभवदिति। नेदं कथनमस्माकं पुरातनानामृषिमुनीनां वाक्येन सह साम्यं बिभर्ति। तस्मादिदं कथनं सर्वथा निर्मूलमेवास्तीति कथने नातिशयोक्तिर्भविष्यति।

एतत्तु सत्यमेवास्ति यत् यावन्त्यपि शास्त्राणि धरातले विद्यमानानि सन्ति तेषां समेषां मूलस्त्रोतस्तु वेद एव। यथा लोके कश्चिदपि जीवः अङ्गैर्विहीनं शरीरमादाय मातुर्गर्भाद्बहिर्नागच्छति तथैव इमे वेदा अपि साङ्गा निर्मिता एवाविर्भूताः तदुक्तमपि गोपथश्रुतौ- **एवमिमे सर्वे वेदाः निर्मिताः साङ्गाः सरहस्याः सकल्पाः सब्राह्मणाः सोपनिषत्काः सेतिहासाः सान्वाख्यानाः सपुराणाः सस्वराः ससंस्काराः सनिरुक्ताः सानुशासनाः सानुमार्जनाः सवाकोवाक्याः॥**[2] इत्यनया श्रुत्या स्पष्टमेव भवति यद्वेदानामाविर्भावो यदाऽभवत् तदानीं तेषामङ्गान्यप्याविर्भूतानीति।

वस्तुतो वेदानां भाषा भावश्चोभावपि दुरूहौ स्तः। तस्माद् वेदानामर्थावगमाय वेदाङ्गानामपेक्षा भवति। वेदार्थबोधाय सहायकत्वात् तेषामुपकारकत्वं तु स्पष्टमेव।

वेदेषु पठ्यमानानां मन्त्राणामर्थज्ञानं नितरामावश्यकं भवति। अत एव भगवता यास्केनार्थज्ञानं प्रशंस्य अर्थज्ञानाभावस्य च निन्दा कृतेति। तेनोक्तं यत्-

---

1. पा.शि.-41-42
2. गोपथब्राह्मणे-पूर्व-प्र-2/1

**स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्।**
**योऽर्थज्ञ इत्सकलं भद्रमश्नुते स नाकमेति ज्ञानविधूतपाप्मा।।**[7]

अर्थाद्यो हि जनो वेदमन्त्रानधीत्य तस्यार्थं न जानाति स स्थाणुरिव पृथिव्यामुपरि भारहार एवास्ति। इत्यनेन कथनेन तादृशस्य मनुष्यस्य जीवनं भारस्वरूपमुक्त्वा अर्थज्ञानाभावस्य निन्दा विहिताऽस्ति। यो हि मनुष्यो वेदार्थं जानाति स सकलं भद्रमत्रत्यमवाप्नोति। प्रेत्य च स्वर्गं गच्छतीति वेदार्थज्ञानस्य प्रशंसायामुक्तम्। भगवता मनुनापि प्रतिपादितं यत्-

**वेदशब्दार्थतत्त्वज्ञो यत्र कुत्राश्रमे वसन्।**
**इहैव लोके तिष्ठन् स ब्रह्मभूयाय कल्पते।।**[8]

अत एभिः प्रमाणैः वेदार्थज्ञानप्रशंसावचनैरिदं स्फुटमेव विज्ञातं भवति यद् वेदाध्ययनानन्तरं तस्य अर्थज्ञानमपि आवश्यकत्वेनैव करणीयम्।

अतो वेदार्थज्ञानायोपकारकाणि वेदार्थबोधे सहायकानि चेमानि षड्वेदाङ्गान्यपि निश्चितरूपेणाध्येतव्यान्येव। एतेषां वेदाङ्गानां अध्ययनाभावे वेदार्थज्ञानं नैव कर्तुं शक्यते। **नान्यः पन्था विद्यतेऽयनाय**[9] इत्यस्मात् श्रौतवचात्। अतः सर्वविधप्रयत्नेन वेदाङ्गानामध्ययनमनिवार्यमस्ति।

**वेदाङ्गानां मुख्यमुद्देश्यम्-**

वेदाङ्गानां किमुद्देश्यमिति जिज्ञासायां संक्षेपेणेदं वक्तुं शक्यते यद् वेदार्थप्रतिपादनमेव। वस्तुतः वैदिकमन्त्राणामुचितोच्चारणाय शिक्षाशास्त्रस्य, कर्मकाण्डपक्षस्य यज्ञानुष्ठानस्य च सम्पादनाय कल्पशास्त्रस्य, शब्दानां रूपज्ञानाय, व्युत्पत्तिज्ञानाय च व्याकरणशास्त्रस्य, मन्त्रार्थज्ञानाय निर्वचनाय च निरुक्तशास्त्रस्य, मन्त्रोच्चारणकाले गतियतिनियमादिज्ञानलाभाय छन्दःशास्त्रस्य तथा अनुष्ठानस्योचितकालनिर्णयार्थं ज्योतिषशास्त्रस्य च प्रयोजनमस्ति। तदन्वत्र सर्वेषामपि वेदाङ्गानां वेदार्थज्ञाने कीदृशं महत्त्वमिति क्रमशो विवेचयामि।

**1. शिक्षाः**- शिक्ष् विद्योपादाने धातोः विनिर्मितस्य शिक्षाशब्दस्यार्थो भवति विद्यादानमिति। तेन शिक्षाशास्त्रं तच्छास्त्रमुच्यते येन वेदमन्त्राणामुच्चारणं शुद्धं सम्पद्येत। वेदे स्वरस्य प्राधान्यं सर्वविदितमेवास्ति। स्वरज्ञानं शिक्षाशास्त्राध्ययनेनैव भवितुर्महति। तैत्तिरीयोपनिषदि शिक्षाशास्त्रप्रयोजनमुक्तं यथा- अथ शीक्षां व्याख्यास्यामः- **वर्णः, स्वरः, मात्रा, बलं, साम सन्तान इत्युक्तः शिक्षाध्यायः। तत्र वर्णोऽकारादिः, स्वरोदात्तादिः, मात्रा ह्रस्वादिः, बलं स्थानप्रयत्नौ, साम निषादादिः, सन्तानो**

---

1. निरुक्ते-1/6/19
2. मनुस्मृतौ-12/102
3. शु.य.सं.- 31/18

**विकर्षणादिः। एतदवबोधनमेव शिक्षायाः प्रयोजनम्।**[1] अत एव पद-वाक्य-प्रमाण-पारावार-पारीरेण श्रीमत्सायणार्येण ऋग्वेदभाष्यभूमिकायामुक्तम्- **स्वरवर्णाद्युच्चारणप्रकारो यत्र शिक्ष्यते उपदिश्यते सा शिक्षा।**

वस्तुतो यथा लोके मानवः घ्राणेन्द्रियेण श्वासादिकं गृहीत्वा यावदायुर्जीवति तद्वदेव शिक्षाशास्त्राध्ययनेन शुद्धमुच्चारणादिकं कर्तुं प्रशिक्षितो भूत्वा शुद्धस्वरेण मन्त्रप्रयोगञ्च कृत्वा सर्वमप्यभीष्टं साधयति। यथा श्वासं विना मनुष्यस्यायुर्न तिष्ठति तथैव मन्त्राणां सस्वरं शुद्धोच्चारणं विना कृतकर्मणः फलं न लभ्यते। अत एवोक्तं पाणिनिना- **शिक्षा घ्राणं तु वेदस्य** इति।

स्वरभ्रष्टस्य मन्त्रपाठस्य कीदृशं दुष्फलं भवतीति प्रकाशयता पाणिनिना लिखितम्-

**मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।**
**स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्।।**[2]

शतपथब्राह्मणानुसारं त्वष्टुः पुत्रः विश्वरूपसंज्ञकः त्रिशीर्षः षडक्ष आस। तस्य कठोरतपश्चर्यया क्षुब्ध इन्द्रस्तं विश्वरूपं जघान। तेन त्वष्टा क्रुद्धो भूत्वेन्द्रस्य वधाय सक्षमं **वृत्र**नामानं पुत्रं प्राप्तुमाभिचारिकं प्रयोगं कृतवान्। तस्मिंश्चानुष्ठाने **इन्द्रशत्रुर्विवर्धस्व** इति मन्त्रेण ऋत्विग्भिर्होमं विहितम्। मन्त्रपाठावसरे त्वष्टुः पुरोहिताभ्यां किलाताकुलीभ्यां बहुव्रीहिसमासोक्तार्थफलप्रदातृस्वरेण साकम् **आद्युदात्त**स्य इन्द्रपदस्य प्रयोगो विहितः, फलतो यजमान एव हतः। अत्र इन्द्रस्य वधाय इन्द्रस्य शत्रोः त्वष्टुर्वर्धनाय च षष्ठीतत्पुरुषसमासोक्तार्थस्य स्वरयुक्तस्य **अन्तोदात्ते**न्द्रपदप्रयोग आसीदपेक्षितस्तन्नाभूदतो यजमानस्य नाशोऽभवत्। इत्येतामेव शतपथोक्तां कथामत्र स्मारयति पाणिनिः।

अतः शिक्षाशास्त्रमाध्यमेन स्वरसहितवेदमन्त्राणां शुद्धोच्चारणस्य ज्ञानं भवति तस्मादस्य वेदाङ्गस्याध्ययनं कर्त्तव्यमेव वेदार्थज्ञानाय।

**2) कल्पः**- वेदानां द्वितीयमङ्गमस्ति कल्पः। **कल्पो वेदविहितानां कर्मणामानुपूर्व्येण कल्पनाशास्त्रम्** इत्यभियुक्तोक्त्या वेदेषु वर्णितानां यागानां पूर्णपरिचयप्रदायकग्रन्थेषु कल्पसूत्राण्यभूतपूर्वाणि सन्ति। अत्र वेदविहितानां कर्मणां क्रमपूर्वकं व्यवस्थापनं कल्पितमस्ति। यागाः द्विविधाः श्रौताः स्मार्त्तश्च। तत्र श्रुत्युक्तयागविधिप्रकाशकानि श्रौतसूत्राणि शुल्बसूत्राणि च प्रवृत्तानि। स्मृतिप्रतिपादितयागविधिप्रकाशकानि गृह्यसूत्राणि धर्मसूत्राणि चोपबृंहितानि। तेन मुख्यतः कल्पसूत्राणि चतुर्विधान्युक्तानि -श्रौतसूत्रम्, गृह्यसूत्रम्, शुल्बसूत्रम्, धर्मसूत्रञ्चेति।

1. तै.उप.- शीक्षावल्ली-1
2. पा.शि.-52

श्रौतसूत्रेषु अग्नित्रयाधानम्, अग्निहोत्रम्, दर्शपूर्णमासौ, पशुयागाः, सप्तसोमसंस्थाकाः सोमयागाश्च प्रतिपादिताः सन्ति। अनेनेदं स्फुटं भवति यच्छ्रौतसूत्रेषु ब्राह्मणग्रन्थवर्णितानां श्रौताग्निसाध्यानां यज्ञानां क्रमबद्धं वर्णनं वर्तते। वेदभेदेन विविधानि श्रौतसूत्राणि सन्ति।

गृह्यसूत्रेषु गृह्याग्निसाध्यानामुपनयनविवाहश्राद्धादीनां संस्काराणां आचारयागानां त्रैवर्णिकैरनुष्ठितानाञ्च विस्तृतं विवरणं विद्यते।

शुल्बसूत्रेषु विशेषरूपेण भूमितिकविषयाणां वेदिनिर्माणप्रकाराणां ज्यामितिशास्त्रीय-सिद्धान्तानाञ्च प्रतिपादनमस्ति। प्रतिपादनेनानेनैतेषां शुल्बसूत्राणां वैज्ञानिकत्वं नितरामेव सिद्ध्यति। यथा श्रौतसूत्राणि वेदभेदेन विभिन्नानि तथैव शुल्बसूत्राण्यप्यनेकानि सन्ति।

धर्मसूत्रेषु धार्मिकनियमाः, प्रजानां राज्ञाञ्च कर्त्तव्याचर्याः, चत्वारो वर्णाः, चत्वार आश्रमाः, तेषां धर्माश्च पूर्णतया निरूपिताः सन्ति। धर्मसूत्राण्येव धर्मशास्त्रप्रवर्तने हेतुभूतानि सन्तीति मन्यते।

उपर्युक्तानां कल्पसूत्राणां संख्या पर्याप्ता अस्ति। तेषां समेषां नामोच्चारणेऽपि महान् कालो भविष्यति अपेक्षितः।

**3 ) व्याकरणम् :- रक्षोहागमलघ्वसन्देहाः** इति वचनाद्वेदरक्षणोपायेषु वेदव्याख्यान-परम्परासु वेदार्थावबोधकेषु शास्त्रेषु च प्रकृतिप्रत्ययपुरस्सरपदस्वरूपप्रतिष्ठापकत्वादर्थनिर्णयकृत् साधनेषु अन्यतमसाधनत्वे प्रयुक्तत्वाद् व्याकरणं नामाङ्गं नितान्तमेव महनीयं श्रेष्ठञ्चास्ति। तस्मादिदं शास्त्रं वेदाङ्गेष्वपि मूर्धन्यं स्थानमावहति। अत एवोक्तं पाणिनिना- **मुखं व्याकरणं स्मृतमिति।**

लोकव्यवहाराय भाषा भवत्यावश्यकी। भाषायां शुद्धता व्याकरणज्ञानेन विना नैव भवितुर्महति। अतोऽस्मिन् धरातले सर्वासामपि भाषाणां व्याकरणमस्त्येव। सर्वास्वपि भाषासु संस्कृतभाषा मातृस्थानीयाऽस्ति। अतोऽस्याः भाषायाः व्याकरणमपि मातृवत् सर्वभाषा सम्पोषिका पूर्णसमृद्धा चास्ति। व्याकरणस्याध्ययनमिहानिवार्यत्वेन अपरिहार्यत्वेन चोक्तम्। तदुक्तमपि केनापि-

**यद्यपि बहुनाधीषे तदपि पठ पुत्र व्याकरणम्।**
**स्वजनः श्वजनो माभूत् सकलं शकलं सकृच्छकृत्॥**

संस्कृतव्याकरणं समुद्रवदपारमगाधञ्चास्ति। व्याकरणविषये उक्तमस्ति यत्- **बृहस्पतिश्च वक्ता। इन्द्रश्चाध्येता। दिव्यं वर्षसहस्त्रमध्ययनकालः अन्तं च न जगाम।** (महाभाष्ये पस्पशाह्निके)। पण्डितसमाजे प्रसिद्धगाथा अस्ति-

**समुद्रवद् व्याकरणं महेश्वरे तदर्धकुम्भोद्धरणं बृहस्पतौ।**
**तद्भागभागाच्च शतं पुरन्दरे कुशाग्रबिन्दूत्पतितं हि पाणिनौ॥**

इन्द्रः, चन्द्रः, काशकृत्स्नः, आपिशलिः, शाकटायनः, पाणिनिः, अमरः, जैनेन्द्रश्च इत्यतेऽष्टौ सन्ति व्याकरणकर्तारो विद्वत्सत्तमाः प्रथिताः। एतदतिरिक्तं कौमारं सारस्वतं शाकलञ्च व्याकरणं यत्र-तत्र प्रसिद्धमस्ति। अस्ति ह्यनन्तमतिगभीरञ्चेदं शब्दशास्त्रं तस्मादुक्तं अनुभूतिस्वरूपाचार्येण-

**इन्द्रादयोऽपि यस्यान्तं न ययुः शब्दवारिधेः।**
**प्रक्रियां तस्य कृत्स्नस्य क्षमो वक्तुं कथं नरः॥**

भाष्यकाराणां पतञ्जिलिमुनीनां यशोगानेन अस्मिञ्जगति कोऽस्ति अपरिचितः खलु। लघवोऽपि बालकाः **'मुनित्रयं नमस्कृत्य'** इत्यस्य अभ्यासं सदा कुर्वन्त्येव। तत्रोक्तेषु त्रिषु मुनीषु पाणिनिपतञ्जलिकात्यायनमुनीनां नामानि स्मारयन्ति।

अतोऽनेन वर्णनेन व्याकरणरूपस्य वेदाङ्गस्य वेदव्याख्याने महती भूमिका अस्ति इत्यत्र नास्ति कस्यापि मनाक् सन्देहः।

4) **निरुक्तम् :**- निरुक्तपदस्य व्युत्पत्तिरेवं कुर्वन्त्याचार्याः- **अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम्** इति। **निःशेषेणोक्तं निरुक्तम्** इति च। आभ्यां व्युत्पत्तिभ्यामिदं स्फुटं भवति यद्वैदिकमन्त्राणां व्याख्यानाय पदजातानां ज्ञानं नितान्तमपेक्षितं भवति। अत्र शास्त्रे चत्वारि पदजातान्युक्तानि नामाख्यातोपसर्गनिपातात्मकानि चेति। एतानि पदजातान्याश्रित्य वेदेषु स्वराणां ज्ञानं भवति। स्वरानुकूलमेवार्थप्रतिपादनमिती**न्द्र-शत्रुर्वर्द्धस्व** इत्यस्मिन् पदे अस्माभिरवलोकितम्। प्रतिकूलस्वरोच्चारणात्तस्य पदस्यार्थोऽपि प्रतिकूलोऽभवत् येन वृत्रस्य निधनं सञ्जातम्।

आदौ कश्यपप्रजापतिना निघण्टुशास्त्रस्य प्रणयनमुपदेशञ्च कृतम्। निघण्टुकालाननतरं निरुक्तस्य समयः प्रारब्धः। दुर्गवृत्तावेवमुल्लिखितमस्ति यच्चतुर्दशनिरुक्तकाराऽभूवन्। यास्ककृते निरुक्ते द्वादशनिरुक्तकाराणां नामानि निर्दिष्टाानि सन्ति। त्रयोदशोऽयं यास्कः, चतुर्दशः कः इति तु अज्ञात एवास्ति।

वेदव्याख्यानाय निरुक्तकाले अनेकपक्षा आसन् येषां नाम्नां संकेतो यास्केन एवं कृतम्- **अधिदैवतः, अध्यात्मः, आख्यातसमयः, ऐतिहासिकाः, नैदानाः नैरुक्ताः, परिव्राजकाः, याज्ञिकाश्च।** वेदार्थानुशीलनाय एतत्सर्वं ज्ञातव्यमेव। यथा लोके श्रोत्रेन्द्रियेण विरहितो मानवः बधिरो भवति एवमेव निरुक्तानामध्ययनं विना बधिर एव भवति।

अत्र पञ्च विषयाः मुख्यरूपेण प्रतिपादिताः सन्ति, येषामुल्लेखो निम्नश्लोके विद्यते-

**वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।**
**धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्॥**

एवं पञ्चविधनिरूपणद्वारा निरुक्तशास्त्रं वेदव्याख्यां सम्पादयीति। लौकिकव्याकरणे

एवमुक्तमस्ति यत् रूढपदानां व्युत्पत्तिर्न विधेयमिति। परं वेदे रूढशब्दानां व्युत्पत्तिः अनेकत्र दृग्गोचरा भवति- **यदसर्पत तत् सर्पिः** सर्पिषो व्युत्पत्तिर्गमनार्थकस्य सृप्धातोर्निष्पन्नो भवति। अनेन प्रकारेण यास्को निर्वचनस्य त्रीन् सिद्धान्तान् प्रतिपादितवान्। तत्रेदमुक्तं यत् सर्वेषामपि पदानां निर्वचनं यथोपलब्धयुक्तिभिः कर्तव्यमेव।

**5) छन्दः** :- छन्दो वेदस्य पञ्चमाङ्गमस्ति। वेदाः सन्ति छन्दोबद्धाः, अतस्तेषामुच्चारणाय छन्दोज्ञानं नितरामपेक्षितं भवति। छन्दोज्ञानं विना यो वेदाध्ययनयजन-याजनादिकार्याणि करोति तस्य तानि सर्वाणि कार्याणि निष्फलानि भवन्ति। तदुक्तं कात्यायनेन- **यो ह वा अविदितार्षेयच्छन्दो दैवतब्राह्मणेन मन्त्रेण याजयति वा अध्यापयति वा स्थाणुं वर्च्छति गर्त्ये वा पात्यते प्रमीयते वा पापीयान् भवति**[1]।

छन्दांसि छादनादिति यास्कवचनात् **छन्द** इत्येतत्पदस्य व्युतत्पत्तिर्भवतिछन्दयति इति छन्दो वा छन्द्यतेऽनेनेति छन्दः। छद्-छादने धातोर्निष्पन्नत्वात् वेदस्यावरणत्वेन प्रयुक्तः छन्दः मन्त्रेषु प्रतिपदं स्थितमस्त्येव।

रसशास्त्रस्य प्रवर्तको भरतमुनिरपि छन्दोविरहितं शब्दं न स्वीकरोति। यथा-

**छन्दोहीनो न शब्दोऽस्ति, न छन्दः शब्दवर्जितम्॥**[2]

अतो वेदव्याख्यानाय वेदार्थज्ञानाय च छन्दसां ज्ञानमपेक्षितं भवत्येव।

सर्वाण्यपि वैदिकच्छन्दांसि अक्षरच्छन्दांसि सन्ति। समस्तानामपि वैदिकच्छन्दसां संख्या षड्विंशतिर्मन्यते। यद्यपि वेदमन्त्रेषु गायत्र्यादीनि छन्दांसि अतिरिच्य **माच्छन्दः प्रमाच्छन्द**[3] इत्यनेन संकेतेन छन्दसामनेकानि नामान्युक्तानि सन्ति। एतानि सर्वाण्यपि छन्दांसि वेदमन्त्रेषु प्रयुक्तानि सन्ति।

एभ्य एव वैदिकछन्दोभ्यो लौकिकच्छन्दसां विकासो जातः। यथा अनुष्टप् छन्दो यथावत् लौकिककाव्ये प्रयुज्यते। त्रिष्टुप् छन्दसः सकाशात् इन्द्रवज्रोपेन्द्रवज्रेति लौककछन्दसः समुदयो मन्यते। जगतिच्छन्दसो वंशस्थस्य, शक्वरीतो वसन्ततिलकायाः समुत्पत्तिर्बभूव। अनेनैव प्रकारेणान्येषां छन्दसां लौकिकानामुदयो ज्ञातव्यः।

**छन्दः पादौ तु वेदस्य** इति कथनेनेदं स्फुटं भवति यद्यथा पद्भ्यां विहीनो जनो पङ्गुरुच्यते न क्वापि गन्तुं समर्थो भवत्येवमेव छन्दसां ज्ञानं विना वेदाध्येतारो पङ्गवो भवन्ति। मन्त्रोच्चारणस्यारोहावरोहज्ञानं विनैव मन्त्रान् पठन्ति। येन मन्त्राणां स्वराः शब्दाश्च कुण्ठिताः भवन्ति। स्वरशब्दयोः कुण्ठावशात् अर्थप्रकाशनं न भवति। अतो छन्दोज्ञानं

---

1. सर्वानुक्रमणी-1/1
2. ना.शा.-14/45
3. शु.य.सं.- 14/18

कर्तव्यमेव।

**6) ज्योतिषम् :- ऋतौ ऋतौ यजतीति ऋत्विक्** इत्यनया व्युत्पत्त्या ऋतु-मास-पक्ष-तिथि-नक्षत्रानुसारं यो यजनं करोति स ऋत्विगित्युच्यते। श्रौतस्मार्त्तयज्ञेषु ये भवन्त्यधिकारिणो यजमानास्तेषां कृतेऽपि ऋत्वनुसारं कार्यारम्भो वेदेषु विहितोऽस्ति। तदुक्तं-**वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः शरदि वैश्यः आदधीत**[1] इति। एतेषामृतुमासपक्षतिथि-नक्षत्रादीनां ज्ञानं ज्योतिषशास्त्रं विना नैव कर्तुं शक्यते। अत एवोक्तं लगधाचार्येण वेदाङ्गज्योतिषे-

**वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्वा विहिताश्च यज्ञाः।**
**तस्मादिदं कालविधानशास्त्रं यो ज्योतिषं वेद स वेद यज्ञान्॥**[2]

वेदभेदेन लगधाचार्येण त्रयाणां ग्रन्थानां प्रणयनं कृतम्- 1) आर्चज्योतिषम्, ऋग्वेदसम्बद्धं षट्त्रिंशत्पद्यात्मकम्; 2) याजुषज्योतिषम्, यजुर्वेदसम्बद्धं ऊनचत्वारिंशत्पद्यात्मकम्; 3)आथर्वणज्योतिषम्, अथर्ववेदसम्बद्धं द्विषष्ट्युत्तरशतपद्यात्मकम्।

तदिदं ज्योतिषशास्त्रं त्रिस्कन्धमुच्यते सिद्धान्तहोरासंहिताभेदेन। वेदाङ्गेषु ज्योतिषं मूर्धनि स्थितमित्युक्तं लगधेन। यथा-

**यथा शिखा मयूराणां नागानां मणयो यथा।**
**तद्वद्वेदाङ्गशास्त्राणां गणितं मूर्धनि स्थितम्॥**[3]

शास्त्रस्यास्य प्रवर्तका अष्टादशमहर्षयः सन्ति ते यथा-

**सूर्यः पितामहो व्यासो वशिष्ठोऽत्रिः पराशरः।**
**कश्यपो नारदो गर्गो मरीचिर्मनुरङ्गिराः।**
**लोमशः पुलिशश्चैव च्यवनो यवनो भृगुः।**
**शौनकोऽष्टादशश्चैते ज्योतिःशास्त्रप्रवर्तकाः॥**

वेदाङ्गेषु चक्षुःस्थानीयमिदं शास्त्रं प्रसिद्धमस्ति। यथा कश्चिज्जनः चक्षूभ्यां विहीनः सन् अन्धो भवति तथैव ज्योतिषशास्त्रज्ञानं विना वेदाध्येता अन्ध एव भवति। उचितानुचितकालज्ञानं विनैव यदि कार्यारम्भः क्रियते चेत् तत्कार्यं निष्फलं भवति। यथा यज्ञारम्भो यदि स्वर्गकामनया क्रियते परन्तु मृत्युयोगे तस्यारम्भो भवेच्चेदत्रोचितफलप्राप्तौ शंका समुदेत्येव। अत एवैतच्छास्त्रं वेदोक्तकर्मसम्पादने महत्त्वपूर्णं स्थानमावहतीति।

---

1. तै.ब्रा.-1/1
2. आर्चज्योतिषम्-36
3. वेदाङ्गज्यो-4

**निष्कर्षः-**

एवमुक्तप्रकारेणेदं सिद्धं यद्वेदाङ्गानां मुख्यं प्रयोजनमस्ति वेदमन्त्राणामर्थज्ञानपूर्वकं तत्रोक्तक्रियाकलापानां सम्यगनुपालनमिति। यतस्तु नीतावुक्तमस्ति यत् ज्ञानं भारः क्रियां विना इति। अर्थात् क्रियाविरहितं यज्ज्ञानं तद्भारस्वरूपमेव भवति। मन्यताम्, कश्चित् पिपासुर्जलं वाञ्छति चेदिदं ज्ञातव्यमेव यत्कूपाज्जलमादाय पिपासाशान्तिः करणीयेति। सत्युपलब्धेऽपि सर्वविधोपकरणे जलोत्कर्षणज्ञानाभावे तस्य पिपासाशान्तिरसम्भवैव भवति। उदाहरणार्थं तत्र कूपोऽप्यस्ति, रज्जुरप्यस्ति, जलाहरणपात्रमप्यस्ति परं यदि जलोत्कर्षणज्ञानं नास्ति चेत्कथं जलं प्राप्तव्यमित्यवस्थायां स हस्तं सम्मृज्जन्नेव स्थास्यति न जलपानेन पिपासाशान्तिमधिगच्छति। एवमेव वेदमन्त्रोच्चारणज्ञानसम्पन्नो यदि कश्चिद्विद्वान् तत्रोक्ताभिः क्रियाभिरपरिचितो भवेच्चेत् तादृशं ज्ञानं केवलं भारस्वरूपमेव भवति। वेदार्थज्ञानस्य तात्पर्यमेवास्ति तत्रोक्तक्रियाज्ञानम्, तद्रहितोऽनर्थज्ञ इति च बोध्यम्। तस्मादुक्तं निरुक्तकृता **योऽर्थज्ञ इत्सकलं भद्रमश्नुते** इति। अतो वेदार्थज्ञानायाद्यापि वैज्ञानिके युगे वेदाङ्गानां प्रासङ्गिकता सुतरामेव सिद्ध्यतीत्यलमतिविस्तरेण।

**जयतु संस्कृतम्। जयतु भारतम्। जयन्तु वेदाः।**



# वेदेषु देवतावादः

**डॉ. धर्मानन्दराउत**

सहायकाचार्यः, साहित्यविभाग

श्रीरंगलक्ष्मीआदर्शसंस्कृतमहाविद्यालयः

वृन्दावनम्, मथुरा (उ.प्र.)

अस्य जगतः निखिल प्राणिवर्गः निसर्गत एव इष्टमभीप्सति अनिष्टं परिजिहीर्षति च। अतः भगवान् आम्नायस्तदुपायं प्रतिपादयन्नखिलं प्राणिजगतमनुगृह्णाति। तत्र ज्ञानाकरे वेदे सर्वविषयकज्ञानस्योपदेष्टृत्वमस्तीति सर्वेऽप्यास्तिका अनुमन्यन्ते। उक्तमस्ति–

**प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुद्ध्यते।[1]**
**एनं विन्दन्ति वेदेन तस्मात् वेदस्य वेदता॥**

इति सायणीयकृष्णयजुर्वेदभाष्यभूमिकायामुधृतप्रमाणदिशा इष्टानिष्टप्राप्तिपरिहारयोर–लौकिकोपायवेदक अपौरुषेयशब्दराशिः वेदः। अतः विश्वस्य प्राचीनतमग्रन्थेषु वेदस्य गौरवान्वितं स्थानं वर्तते। स तु वेदः पूर्वमविभक्त एवासीदिति ऐतिहासिकाः विद्वांसो वदन्ति, किन्तु सोऽतिदुरूहतया, सर्वैः सारल्येनावगन्तुमशक्यतया च परमकारुणिकेन भगवता व्यासेन तस्य तस्य चतुर्धा विभागः कृतः। यथा–

**अवतीर्णो महायोगी सत्यवत्यां पराशरात्।**
**उत्सन्नान् भगवान् वेदानुजहार हरिः स्वयम्॥**

**चतुर्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः।**
**शतधा चैकधा चैव तथैव च सहस्रधा॥**

भवतु नाम, अत्र संगोष्ठ्याः वहुचर्चितः विषयः 'वेदेषु देवतावादः' इति विषयाधारेण 'ऋग्वेदे देवतावादः' इति विषयं पुरस्कृत्य यत् किमपि मया संकलित तदेव भवतां विदुषां पुरतः समासेन किंचित् प्रस्तौमि।

तत्र ऋग्वेदे याः सूक्तयः परिदृश्यन्ते प्रायतः ताः सर्वाः सूक्तयःदेवानां स्तुतिपरका इति प्रतीयन्ते। वैदिकाः ऋषय समग्रस्य विश्वब्रह्माण्डस्य त्रयः विभागाः परिकल्पिताः द्युलोक–अन्तरिक्षलोक–भूलोकभेदन। अनया रीत्या सूर्यदेवं, वायुदेवमग्न्दिवञ्च त्रिदेवमिति

1. सायणीयकृष्णयजुर्वेदभाष्यभूमिकायाम्

कथ्यते। तत्र सूर्यः द्युस्थानीयदेवः, वायुरन्तरिक्षस्थानीयदेव, अग्निश्च पृथ्वीस्थानीयदेव इति विभागप्रकारः। निरुक्तकारयास्केनोक्तम्–

**तिस्त्र एव देवा इति नैरुक्ताः। अग्निः पृथ्वीस्थानः,[1]**
**वायुर्वेन्द्रो वाऽन्तरिक्षस्थानः, सूर्यो द्युस्थानः।**

एते देवाः स्व–स्व गुणैः स्व–स्व कार्यैश्च बहुनामभिरभिहिताः भवन्ति। यथा ऋग्वेदे–

**एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः।[2]**

अस्मिन् देवतावादे देवशब्दमादाय निरुक्तकारः यास्कः ब्रूते–

**"देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो वा भवति"।**

अतः निरुक्तवचनानुसारं देवशब्दार्थः स भवति यो मनुष्येभ्यः किंचित् ददाति। सम्पूर्णाय जगते वा ददाति। एवं विद्वांसो पुरुषा अपि देवाः। तेऽपि इह निजेभ्यो भक्तेभ्यः, सहचरेभ्यः, मनुष्येभ्यो विद्यां ज्ञानं वा प्रयच्छति। अनेन न्यायेन सूर्यः, चन्द्रः, गगनचाऽपि देवाः। तेऽपि सम्पूर्णाय सृष्टै प्रकाशमवकाशं वा वितरन्ति। पितरौ, आचार्यः, अतिथिः, इमे सर्वेऽपि देवाः। एवं प्रकारेण 'देवतावाद' इति पदस्थित देवशब्दस्य यद्यपि विविधोऽर्थः, तथापि योऽर्थः परमात्मन ऐश्वर्याध्यात्मिकां सम्पदमभिव्यनक्ति सोऽर्थ अत्रैव ग्राह्यः। 'वेदेषु देवतावाद' इत्यत्र देवशब्दस्य तात्पर्यगोचरीभूतः स एव अर्थो मन्तव्य यो दिव्यैर्गुणैः सम्पन्नः।

तत्र ऋग्वेदे यावन्ति च सूक्तानि समुपलभ्यन्ते तेषु सर्वेषु कतिचिद् विहाय देवानां स्तुतिरेव कृता चकास्ति। यद्यपि भूयांसि कंचिदेकमेव देवमधिकृत्य प्रणीतानि, यथा इन्द्रमधिकृत्य प्रणीतानि सूक्तानि सार्धशतद्वयम्, अग्निमधिकृत्य प्रणीतानि सूक्तानि शतद्वयम् तथा सोममधिकृत्य प्रणीतानि शतं सूक्तानि दृश्यन्ते। या तेनोच्यते सा देवता इति नियमानुरोधेन भूयांसो देवाः सिद्ध्यन्ति। एवञ्च ऋग्वेदस्य तृतीयमण्डलस्य नवमे सूक्ते नवमेन मन्त्रेणापि देवानां भूयसी संख्या प्रतिपादिता म्पद्यते। यथा–

**त्रीणि शता त्रीणि सहस्त्राण्यग्निं[3]**
**त्रिंशच्च देवा नव चासपर्यन्।**
**औक्षन् घृतैरस्तृणन् बर्हिरस्मा**
**आदिद्धोतारं न्यसादयन्त।।**

---

1. निरुक्तम्–7–5
2. ऋग्वेदे–1–164/46
3. ऋग्वेदः–तृतीयमण्डले–9–9

अयं मन्त्रो देवानां त्रणि सहस्राणि त्रीणि शतानि एकोनत्वारिंशच्चेति संख्या स्वीकुरुते। तथा सति 'या तेनोच्यते सा देवता' इति नियमानुसारं सूक्तप्रतिपाद्यदेवविधया किञ्च पूर्वपतिपादितमन्त्रसंख्यानुरोधेन च यद्यपि देवानां बहुत्वमृग्वेदोऽभिधत्ते तथापि बहुदेवतावाद एवास्य सूक्तकृतां महर्षिणां जीवनव्यापकः सिद्धान्त इति वक्तुं युक्तं न प्रतीयते। किन्तु चेतनाविकासस्य शैशववेलायां बहुदेवतावादे धृतास्थापि यथा यथा विकासः परिपाकमापन्नस्तथा तथा तेषां विश्वासोऽपि परिवर्तनं गृहणन् अभूत्। अतएव ऋग्वेदस्य तृतीये मण्डले पञ्चपसचाशत्तमं सम्पूर्णं सूक्तमेव देवैश्वर्यस्य नानात्वनिराकरणाय प्रणीतं प्रकाशते। यथा एकमुदाहरणम्–

**उषसा पूर्वं अध यद् व्युर्ष्महद्**
**विजज्ञे अक्षरं पदे गोः।**
**व्रता देवानामुप न प्रमुषन्**
**महद् देवानामसुरत्वमेकम्।।**[1]

अस्य मन्त्रस्य योऽर्थस्तदनुरूपं सर्वदेवानुस्यूतस्यैकस्य सर्वदेवताश्रितस्यैश्वर्यस्यास्तित्वं सिद्ध्यति। इदञ्च सर्वदेवानुस्यूतस्यैश्वर्यस्य वैविध्यं न तु एकमेव। तथा चास्यैकस्यैश्वर्यस्य दृष्ट्या देवोऽप्येक एव मुख्यरूपेण भवितुमर्हति। अतः ऋग्वेदस्य बहुदेवतावादो न पार्यन्तिकः सिद्धान्तः। इदञ्च दिव्यं यदैश्वर्यं तत्सर्वेषां शिरोधार्यम्। इदमपि ऋग्वेदे संकेतितमस्ति। ऋग्वेदस्य तृतीयमण्डलस्य षट्पञ्चाशत्तमे सूक्ते प्रथमेन मन्त्रेण सूक्तकारेणास्य तथ्यस्य संकेतोऽनुष्ठितः। यथा–

**न ता मिनन्ति मायिनो न धीरा**
**व्रता देवानां प्रथमा ध्रुवाणि।**
**न रोदसि अद्रुहा वेद्याभिर्न**
**पर्वता निनमे तस्थिवांशः।।**[2]

पुनश्च दशममण्डलस्याष्टाशीतितमे सूक्तेऽष्टादशेन मन्त्रेण क्रियमाणस्य प्रश्नस्य यादृशं समाधानं तादृशात् समाधानादपि बहुदेवतावादोऽनास्थेयतामापन्नः सिद्ध्यति।

यथा–

**कत्यग्नयः कति सूर्यासः**
**कत्युषासः कत्युस्विदापः।**

---

1. ऋग्.–म. 3, सू. 55, म.–1
2. ऋग्.–3/56–1

**नोपस्पिजं पितरो वदामि**
**वः कवयो विध्मने किम् इति॥**[1]

प्रश्नबोधके मन्त्रेऽग्नीनां सूर्यादीनाञ्च का संख्येति प्रश्नं समादधानेनाष्टम-मण्डलस्याष्टापञ्चशत्तमे सूक्तेऽवस्थितेन द्वितीयेन मन्त्रेण देवानामेकैव संख्या प्रतिपाद्यमाना बहुत्वं तेषां व्यावर्त्तयति। यथा–

**एक एवाग्निर्बहुधा समिद्ध**
**एकः सूर्यः विश्वमनु प्रभूतः।**
**एकैबोषाः सर्वमिदं विभात्येकं**
**वा इदं विबभूव सर्वम्॥**[2]

मन्त्रस्यास्य चरमोऽशो येन "एकं वा इदं विबभूव सर्वम्" इति निर्दिशति महर्षिः। अनेनेदं स्पष्टमेव प्रतिपादितं सम्पद्यते यदेकस्यैव परमात्मनः सर्वे देवाः विभूतय इति। एतेनैकदेववाद एव ऋग्वेदस्य श्रद्धेयः सिद्धान्त इति निश्चीयते।

पुनश्च ऋग्वेदस्य दशममण्डलस्य चतुर्दशोत्तरैकशततमे सूक्तेऽवस्थितेन पञ्चमेन मन्त्रेण सध्रिर्नाम वैरूप ऋषिरेव देवानुद्दिश्य व्याचष्टे। स कथयति मेधाविनः क्रान्तप्रज्ञाः मानवाः सुपर्णं परमात्मानमेकं सन्तं स्तुतिस्वरूपैर्वचोभिर्बहुधा कल्पयन्ति। सर्वे देवाः सर्वगतस्यैकस्य परमात्मनो विभूतयः। परमार्थतस्तु सर्वव्यापक एक एव परमात्मा देव इति। एवं दशममण्डलस्यास्मिन्नेव सूक्तेऽवस्थितेन चतुर्थेन मन्त्रेण स एव ऋषिरेकस्यैव परमात्मनो नानानामरूपात्मकेऽस्मिन् विश्वस्मिन् प्रवेशं व्याहृत्य तस्यैव निखिल-व्यवहारोपपादनत्वमपि प्रत्यपीपदत्। अतः सर्वव्यापकः एक एव परमात्मा देव इति। तस्मात् कारणात् एकदेववाद एव महर्षिणां परिनिष्ठतः सिद्धान्तः। अतएव परिनिष्ठितायां स्थितौ महर्षिभिरपीदमेवोद्घोषितम्–

**'एकं सद्विप्रा बहुधा वदन्ति।'**

अनेन प्रकारेण देवानधिकृत्य पाश्चात्यविद्वांसः मैक्समूलार-ह्विटने-हौपकिन्स इत्यादय विभिन्नानि मतानि समुपस्थापयन्ति। परन्तु तेषां खलु विचारः न समादरणीयः विद्वद्भिरिति कृत्वा नालोच्यतेऽत्र। एवं पाश्चात्यैः विद्वद्भिरुपस्थापितस्य विचारजातस्य तथा साक्षादृग्वेदगतविभिन्नसूक्तानामनुशीलनेनायं निष्कर्षो निर्गच्छति यद् ऋग्वेदे देवानां भूयसां वर्णने सत्यपि तेषामेकत्वस्पर्शिनी काचित् धारा ऋग्वेदे परिदृश्यते इति प्रतीतिर्भवति।



1. ऋग्.-10/88-18
2. ऋग्.-8/58-2

# वैदिकस्तुतिषु अग्निदेवस्य देवत्वम्

**डॉ. रणजीतकुमारः**
वेदाचार्यः
राजकीय-नेहरु-संस्कृत-महाविद्यालयः
शिमला, हि.प्र.

**प्रस्तावना।**

देवताविषयिणी एषा परिचर्चा। का नाम देवता इत्यत्र बहुचर्चितं। सामान्येन यथा जानीमो वयं यत् मन्त्रस्थायाः देवतायाः निश्चयार्थं वेदपरम्परा एतां यास्कीयपरिभाषाम् अनुगच्छति यत्–

**यत्कामऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते। तद्दैवतः स मन्त्रो भवति। 7.1**

अत्र कामना प्रधाना। यमर्थं कामयमानः द्रष्टा यां देवतां स्तौति सैव तन्मन्त्रस्य देवता। कात्यायनाचार्या अपि या देवतापरिभाषां प्रतिपादयन्ति तत्र प्रतिपाद्यविषय एव देवतारूपेण अवबुध्यते। तद्यथा–

**या तेनोच्यते सा देवता[1]।**

तेन वाक्येन यत्प्रतिपाद्यं वस्तु सा देवता। एवमेव देवता पदस्य निर्वचनम् आचार्यपादैःप्रदीयते यथा-

**देवो दानाद्वा-दीपवाद्वा-द्योतनाद्वा-द्युस्थानो भवतीति वा। यो देवः सा देवता। ( निरुक्तम् 7.15 )**

अत्र देवपदस्य अर्थचतुष्ट्यमुपलभ्यते। यो ददाति, दीप्यते, द्योतयति अथवा द्युस्थाने भवति सः देव। अर्थात् यः दानशीलः वर्तते, प्रकाशकः वर्तते, द्योतकः वर्तते, द्युस्थानीयो वर्तते।

एतदनन्तरं प्रश्नोऽयम् उपस्थितो भवति कति देवताः?

अत्र निरुक्तसिद्धान्तानुसारं–

---

1. ऋक्सर्वानुक्रमणी 2.4.5

**महाभाग्याद्देवताया एक आत्मा बहुधा स्तूयते। एकस्यात्मनोऽन्ये देवाःप्रत्यङ्गानि भवन्ति[1]।**

एतद् यास्कीयवचनं वेदलिङ्गादपि सिद्धयति। यथा उच्यते मन्त्रेषु यत्–

**तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः।**
**तदेव शुक्रं तद् ब्रह्म ता आपः स प्रजापतिः॥** यजु. 32.1

वेदेषु अग्नीन्द्रवरुणरुद्रमरुतादिदेवतावाचिनामानि दृष्ट्वा पाश्चात्यैः अनुसन्धातृभिः नि परीक्षणेन बहुदेवतावादः, उपास्यश्रेष्ठतावादः (Henotheism) , प्रकृतिपूजावादः इत्येते वादाः प्रतिपादिताः[2]। परन्तु वेदप्रामाण्येन एव इदं ज्ञायते यत् वेदस्य उपास्य एक एव वर्तते। उपर्युक्तानि देवतानामानि एकस्यैव परमेश्वरस्य गुणवाचकानि वर्तन्ते। यथा अन्यत्रापि–

**इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्।**
**एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः॥**

(ऋग्वेदः 1.164.46)

एवं वस्तुतः प्रतिपाद्यदेवता तु एका एव। एकं सत्स्वरूपं परमेश्वरं बुद्धिमन्तः महाभाग्याद् बहुधा वदन्ति। तमेव परमेश्वरम् इन्द्रमित्रवरुणाग्नीत्यादिनामभिः स्तुन्वन्ति। एतेषु देवनामसु अग्निदेवता अन्यतमा। या प्रस्तुतपत्रस्य प्रतिपाद्या वर्तते। यद्यपि अग्निदेवतामधिकृत्य महत् कार्यं विहितमनुसन्धातृभिः तथापि अस्याः महाभाग्यादेव वैदिकप्रार्थनासु अग्निदेवस्य देवत्वं कथं स्फुटं भवति इति विचारपोषणाय विषयेऽस्मिन् विवेचनं प्रस्तूयते।

**अग्निः** "अति गतौ" धातोः निप्रत्ययेन अग्निशब्दः सिद्धयति। अङ्गति ऊर्ध्वं गच्छति इति अग्निः। अग्निपदस्य अर्थनिर्देशे आचार्यदृष्टिः निर्दिशति यत्र निर्वचनपञ्चकमुपलभ्यते। **अग्निः कस्मात्?**

**1. अग्रणीः भवति[3]–**

सर्वेषु अपि अर्थेषु अयम् आत्मानम् अग्रं नयति। अत एव सेनापतिरूपेण वेदाः

---

1. नि. 17.4
2. History of Sanskrit Literature India-what it can teach us by prof. Maxmullar, History of ancient Sanskrit Literature, Vol. 1 by Winterneitze, History of Sanskrit Literature by prof. Weber, Religion and philosophy of the veda by A.B. Keith.
3. निरुक्तम् 7.4.14

इमं निर्दिशन्ति। तद्यथा–**अग्निर्देवतानां सेनानी:**[1]**।** अत्र अग्र उपपदात् णीञ्धातो: अग्नेर्निर्वचनं दृश्यते।

**2. अग्रं यज्ञेषु प्रणीयते[2]–**

दुर्गाचार्यानुसारं प्रथमं यज्ञेषु प्रणीयते। न तावत् किञ्चिदन्यत् क्रियते यावदयं न प्रणीयते[3]। अत्रापि अग्रउपपदात् णीञ्धातो: अर्थावाप्ति:।

**3. अङ्गं नयति सन्नममानः–**

अत्र अङ्गपूर्वकात् नम्धातो: अग्निपदसिद्धिर्दृश्यते। यत्रायं सन्नमयति साधनत्वेन वैदिके वा लौकिके वार्थे, तत्र सन्नममान एवात्मानं प्रधानीकृत्य सर्वमन्यदात्मनोऽङ्गतां नयति गुणीकरोतीत्यर्थ:[4]। यदा अङ्गोपपदात्समर्थविशिष्टान्नयते: क्विप्। सन्नममान: स्वयमेव प्रह्वीभवन् हविषां पाककरणत्वेन यज्ञस्य साधनभावं प्रतिपद्यमानोऽङ्गमात्मनो नयति प्रापयतीत्यग्नि:।[5]

**4. अक्नोपनो भवतीति–**

नञ्पूर्वकात् क्नूयीशब्दे उन्दे च इति धातो: अग्निपदं निर्वक्ति स्थौलाष्ठीवि: आचार्य:। अक्निर्भवन् अग्निर्भवति। नाम य:पदार्थान् आर्द्रं न करोति प्रत्युत शोषयति।

**5. त्रिभ्य आख्यातेभ्यो जायत[6]–**

त्रिभ्य: नाम इण्गतौ, अञ्जू गतौ/दह भस्मीकरणे, णीञ्प्रापणे इत्येतेभ्य: धातुभ्य: अग्निपदस्य निर्वचनमिच्छन्ति शाकपूणि: आचार्या:। एवं यस्मिन् गति: रुपाभिव्यक्ति:, दहनं नयनं च वर्तते सोऽग्नि:।

बृहद्देवताग्रन्थे अग्निदेवस्य त्रीणि रूपाणि–

1. पवमान: अग्नि: (पृथ्वीस्थानीय:) 2. वनस्पति: अग्नि: (मध्यमस्थानीय:) 3. शुचि: अग्नि (द्युस्थानीय:)।[7]

---

1. ऋग्वेद: 10.110.11, ऐ.ब्रा. 4.1.20
2. निरुक्तम् 7.4.14
3. निक्तम् 7.4.14 दुर्गाचार्य:
4. निक्तम् 7.4.14 दुर्गाचार्य:
5. निक्तम् 7.4.14 व्याख्या (दुर्गाचार्यकृत–ऋज्वर्थाख्यव्याख्यानुसारी मुकुन्दझाशर्मण: निरुक्तविवृत्ति)।
6. निक्तम् 7.4.14
7. इहैष पवमानोऽग्निर् मध्यमोऽग्निर्वस्पति:।
   अमुष्मिन्नेव विप्रस्तु लोकेऽग्नि: शुचिरुच्यते॥

1. अग्निः (पृथ्वीस्थानीयः) 2. जातवेदाः अग्निः (मध्यमस्थानीयः) 3. वैश्वानरः अग्निः (द्युस्थानीयः)।[1]

**जातवेदाः कस्मात्?**

**जातानि वेद**-स हि जातानि सर्वाणि भूतानि वेद जानाति लोकपालकत्वात्। न हि तदस्ति जातमस्मिंल्लोके यदसौ न वेद। सर्वज्ञ इत्यर्थः।

**जातानि वैनं विदुः**- सर्वाणि भुवनानि एनं विदुः जानन्ति। जातैःप्राणिसंघैरसौ ज्ञायत इति।

**जाते जाते विद्यत इति वा**-सर्वस्मिन्भूतजाते विद्यत इति। न तदस्ति जातं यत्र असौ न विद्यते।

**जातवित्तो वा जातधनः**- ऐश्वर्यादिः यस्य स इति।

**जातविद्यो वा जातप्रज्ञानः**- जातमात्र एव विद्योतते प्रज्ञानस्वभावत्वादिति। यद्वा जातं वेदो विचारणं यस्य सः[2]।

**वैश्वानरः कस्मात्? विश्वान्नरान्नयतीति**—सर्वासु प्रवृत्तिषु अयमेव नरान्नयति प्रवर्तयतीति वैश्वानरः।

**विश्वे एनं नरा नयन्तीति वा**- स तासु तासु क्रियासु नरैरङ्गभावं नीयमानः कर्म संपद्यते।

**यत्त्वाग्नेयमिति ब्रूमः सूक्तभाक् तत्र पार्थिवः।**
**जातवेदस्यमित्युक्ते सूक्तेऽस्मिन्मध्यमः स्मृतः।** बृहद्देवता 1.99।
**वैश्वानरीयमिति तु यत्र ब्रूमोऽथवा क्वचित्।**
**सूर्यः सूक्तस्य भाक् तत्र ज्ञेयो वैश्वानरस्तुतौ॥** बृहद्देवता 1.100।

यदा केनापि सूक्तेन अग्निः स्तूयते तदा तस्य सूक्तस्य देवता पार्थिवाग्निः भवति। यदा जातवेदाः सम्बुध्यते तदा मध्यमः अग्निः। यदा च वैश्वानरः स्तूयते तदा सूर्यः एव तत्र स्तूयते।

**डॉ. कपिलदेवद्विवेदीवर्यः** ऋचः उदाहृत्य वैश्वानराग्निविषये कथयति यत्— वैश्वानराग्निः सृष्टेः केन्द्रियतत्त्वं कथ्यते[3]। विश्वव्यापकम् अग्नितत्त्वं समष्टिरूपेण

---

1. इहाग्निभूतस्त्वृषिभिर् लोके स्तुतिभिरीडितः।
जातवेदा स्तुतो मध्ये स्तुतो वैश्वानरो दिवि॥
2. निरुक्तम् 7.5.19 व्याख्या (दुर्गाचार्यकृत-ऋज्वर्थाख्यव्याख्यानुसारी मुकुन्दझाशर्मणः निरुक्तविवृत्ति)।
3. वैश्वानरः नाभिरसिः क्षितीनाम्...ऋग्वेदे 1.59.1

**वैश्वानराग्निः** नाम्ना उच्यते। अयम् अग्निः सृष्टे प्रत्येकस्मिन् पदार्थे नाभिकीय-ऊर्जारूपेण कार्यं करोति।[1]। अयं द्युलोके अन्तरिक्षे, पृथिव्यां, सूर्ये, जले, वनस्पतिषु, मानवेषु समुद्रादिषु सर्वत्र व्याप्तः वर्तते।[2]। एतस्य ऊष्मया एव प्रत्येकस्मिन् पदार्थे विकासः, प्रगतिः, चपापचयस्य च क्रिया भवति। वैश्वानराग्निः पृथिव्याः केन्द्रे वर्तते। एतेन एव द्यावापृथिव्योः विस्तारः अभवत्। यथा सूर्ये रश्मयः वर्तन्ते तथैव वैश्वानराग्नौ शाश्वती ऊष्मा वर्तते[3]। एतस्य ऊष्मया एव भूगर्भे रत्नादयः जायन्ते। वैश्वानराग्नेः रूपद्वयम्-

1. भौतिकम् 2. आध्यात्मिकञ्च[4]

भौतिकरूपेण अयं दहति, पयति, ऊष्मां च यच्छति। आध्यात्मिकरूपेण आत्मा[5] वर्तते। मानवशरीरेषु अयम् अग्निः प्राणाग्निरूपेण मनुष्यं जीवयति। आत्मरूपाग्निं ज्ञातुं प्राप्तुम् उपायद्वयं वर्तते- ज्ञानं कर्म च। ज्ञानार्थे चितिशब्दस्य प्रयोगः वर्तते कर्मनिमित्तं च क्रतुशब्दस्य[6]। ज्ञानकर्मणोः द्वारा मानवः तम् अमराग्निं परमात्मानं ज्ञातुं शक्नोति।

एवमेतादृशाग्निदेवतायाः स्तुतिः प्रार्थना नाद्य अपितु पूर्वस्मादेव विधियते प्राथम्येन। अत एव ऋग्वेदस्य प्रथमे एव सूक्ते उच्यते-

अग्निमीले पुरोहितम् यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम्[7]। अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत। स देवाँ एह वक्षति[8]।

अयमग्निः ईड्यो नाम स्तुत्यो वर्तते। न केवलं पूर्वेभिर्ऋषिभिः उत नूतनैरपि। अत एव अस्याः देवतायाः प्रार्थनासु, स्तुतिषु, कामनासु कथं विद्यते देवत्वम् इति अनुशीलनस्य प्रयासोऽयम्।

## 2. स्तुतिषु अग्निदेवता।

यतोहि देवता दानाद् नाम ददाति अत एव मनुष्योऽपि याचयति प्रार्थयति। अग्नेः सकाशाद् नैकाः प्रार्थनाः दरीदृश्यन्ते। एवं प्रार्थनायाः परिप्रेक्ष्ये किं स्वरूपं तत्र-तत्र स्फुटीभवतीति पक्षत्रये अवलोकयामः।

---

1. मूर्धा दिवो नाभिराग्निः पृथिव्या...ऋग्वेदे 1.59.2
2. या पर्वतेषु औषधीषु अप्सु या मानुषेष्वसि तस्य राजा। ऋग्वेदे 1.59.3
3. आ सूर्ये न रश्मयो ध्रुवासो वैश्वानरे दधिरे अग्ना वसूनि। ऋग्वेदे 1.59.3
4. द्विता होतारम्...ऋग्वेदः 3.2.1
5. अग्निर्वै सर्वेषां देवतानाम् आत्मा। शत.ब्रा. 14.3.2.5 अग्निरेव ब्रह्म। शत.ब्रा. 10.4.1.5
6. क्रत्वा...देवासो अग्निं जनयन्त चित्तिभिः। ऋग्वेदः 3.2.3
7. ऋग्वेदः 1.1.1
8. ऋग्वेदः 1.1.2

### 2.1 अग्नेः अध्यात्मस्वरूपम्।

ऋग्वेदीयमन्त्राणामाधारेण अस्याः देवतायाः अध्यात्स्वरूपमत्र विविच्यते। उपासनादृष्ट्या अयं प्रार्थ्यते यत्–

**उप त्वाग्ने दिवेदिवे दोषास्तर्धिया वयम्। नमो भरन्त एमसि।**

ऋग्वेदः 1.1.7

हे अग्ने! वयम् उपासकाः प्रतिदिनं रात्रौ अहनि च धिया स्वबुद्ध्या कर्मणा वा त्वां नमस्कुर्वन्तः समीपे आगच्छामः। अत्र अग्निदेवतायाः शरणं सामीप्यां लक्ष्यं वर्तते। एतदर्थं स्तुतावेव कि कर्तव्यमित्यपि निर्दिष्टं यदेषा देवता अध्यात्मरूपेण नाम ब्रह्मरूपेण यदा स्तूयते तदा अस्य सामीप्यं प्राप्तुं प्रतिदिनम् औपासनकर्म विधेयमिति। अन्यस्मिन् मन्त्रे–

**स नः पितेव सूनवेऽग्ने सूपायनो भव। सचस्वा नः स्वस्तये।** ऋ.1.1.9

अग्निः अस्माकं पितृवत् पालकः संरक्षकश्च वर्तते। प्रार्थितोऽयं यत् त्वम् अस्मभ्यं स्वस्तये नाम कल्याणार्थं पितेव पुत्रार्थं सूपायनो भव सुखसाधनं पदार्थप्रापकं भव। यथा पिता पुत्रं पालयति तथैव अस्मान् पालय। समूहगत–आध्यात्मिकाग्नेरपि निर्देशोपलभ्यते।

अग्निसंवर्धनाय यस्यामृचि साधनानि निर्दिष्टानि तानि ध्यातव्यानि सन्ति। तद्यथा–

**अग्निं घृतेन वावृधुः स्तोमेभिर्विश्वचर्षणिम्। स्वाधीभिर्वचस्युभिः।**

ऋग्वेदः 5.14.6

अत्र पं. सातवलेकरमहाभागानामनुसारेण विश्वचर्षणिं अग्निं नाम सार्वमानुषम् अग्निं वर्धापयतु। कैः साधनैः तर्हि घृतेन=स्वतेजसा स्तोमेभिः=संघटनभावनया स्वाधीभिः= आत्मबुद्ध्या अथ च वचस्युभिः=वाण्याः योगेन च। अत्रायं विश्वचर्षणिः अग्निः न केवलं एकं मनुष्यं इंगयति प्रत्युत प्रतिमनुष्यं यो वर्तते एतादृशः व्यक्तिगतोऽपि संघरूपो यो वर्तते तथाविधः अग्निदेवः उक्तसाधनैः वर्धनीयः इति निर्दिष्टम्। एवम् अस्य सार्वमानुषाग्नेः उन्नत्या राष्ट्रौन्नतेः मूलम् अत्र दृश्यते इति एतेषां मतम्[1]।

अग्नेः अध्यात्मस्वरूपं स्फुटतरं भवति वैश्वानराग्नेः वर्णनप्रसङ्गे। तद्यथा–

**वया इदग्ने अग्नयस्ते अन्ये त्वे विश्वे अमृता मादयन्ते।**
**वैश्वानर नाभिरसि क्षितिनां स्थूणेव जनाञ् उपमिद्ययन्थ॥**

ऋ.वे.1.59.1

1. अग्निदेवता सातवलेकर पृ. सं.10

अत्र वैश्वानर इति विशेषणोपेतम् अग्निम् उपवर्णयति। हे विश्वेषां नराणां जाठररूपेण संबन्धिन्नग्ने! ये अन्ये अग्नयः सन्ति ते सर्वेऽति तव शाखा एव। अतः त्वयि सति सर्वे अमरणधर्माणो देवाः हृष्यन्ति। न हि त्वद्व्यतिरेकेण तैर्जीवितुं शक्यते। हे वैश्वानर! त्वं मनुष्याणां नाभिः असि अतः यथा गृहोपरिस्थं वंशं स्तम्भः धारयति तद्वत् त्वं जनान् धारयसि (सायणभाष्यम्) । अयमग्निः मनुष्याणां बुद्धौ निवसति। यस्य प्रेरणया कार्ये संलग्नता भवति। उक्तम् ऋचि–

**अग्निं वो देवयज्ययाग्निं प्रयत्यध्वरे।**
**अग्निं धीषु प्रथममग्निमर्वत्यग्निं क्षैत्राय साधसे।।** ऋ. 8–71–12

अग्निदेवतायाः मननकर्तृरूपेणापि वर्णनमुपलभ्यते–

**त्वं ह्यग्ने प्रथमो मनोतास्या धियो अभवो दस्म होता।**
**त्वं सी वृषन्नकृणोर्दुष्टरीतु सहो विश्वस्मै सहसे सहध्यै।।**

ऋ. 6.1.1

एवम् अध्यात्मदृशा नैकानि उदाहरणानि अस्य देवस्य स्वरूपम् अध्यात्मपक्षं च उद्घाटयन्ति।

### 2.2 आधिदैविकस्वरूपम्।

अग्नेः सकाशात् प्रार्थना क्रियते यत् अग्ने!

**मा नो अग्ने दुर्भृतये सचैषु देवेद्धेष्वग्निषु प्र वोचः।**
**मा ते अस्मान्दुर्मतयो भृमाच्चिद्देवस्य सूनो सहसो नशन्त।।**

ऋ. 7.1.22

त्वं नः सचा=सहायकोऽसि अतः देवेद्धेषु=देवैः प्रक्षिप्तेषु अग्निषु दुर्भृतये=कृशतायै मा प्रवोचः। अत्र मुख्याग्नेः वर्णनं वर्तते। अयमग्निः देवेद्धः नाम देवैः प्रदीप्तः वर्तते। अत्र कैः देवैः प्रदीप्ताः अग्नयः इत्यत्र स्पष्टता न वर्तते।

अपां गर्भोऽग्निः बहुत्र निर्दिष्टः।

**त्वमग्ने द्युभिस्त्वमायशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि।**
**त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः।।** ऋ 2.1.1

इत्यत्र **"त्वम् अद्भ्यः"** इति पदेन जलाद् अग्नेरुत्पत्तिः द्योतिता। अग्निः आधिदैविकरूपेण जगति यत्र यत्र वर्तते तस्य निर्देशोऽपि अस्यामृचि एवं वर्तते–

यदयं नृणां नृपतिः वर्तते। अयं दिवि, जले, प्रस्तरे, वने, ओषधीषु आत्मानं प्रकटयितुं समर्थोऽस्ति।

**2.3 आधिभौतिकस्वरूपम्–**

आधिभौतिकदृष्ट्या नैकत्र अग्निः प्रार्थ्यते। अग्निः रयीणां सदनं वर्तते।

**नाभिं यज्ञानां सदनं रयीणां महामहावमभि सं नवन्त।**
**वैश्वानरं रथ्यमध्वराणां यज्ञस्य केतुं जनयन्त देवाः॥** ऋ. 6.7.2

विश्वे जनाः सुखनिमित्तं वैश्वानराग्नेः सुमतिं प्रार्थ्यमानाः कर्मभिः तम् उपतिष्ठन्ते।

**वैश्वानरस्य सुमतौ स्याम राजा हि कं भवनानामभिश्रीः।**
**इतो जातो विश्वमिदं वि चष्टे वैश्वानरो यतते सूर्येण[1]॥**

धनप्राप्तये अयं प्रार्थ्यते।

**पावकशोचे तव हि क्षयं परि होतर्यज्ञेषु वृक्तबर्हिषो नरः।**
**अग्ने दुव इच्छमानास आप्यमुपासते द्रविणं धेहि तेभ्यः॥**

ऋ. 3.2.6

अग्निद्वारा धनप्राप्तिर्निदिष्टा। तद्यथा–**अग्निना रयिमश्नवत्पोषमेव दिवे दिवे।**

ऋ. 1.1.3

अत्र एतादृशं धनं याचितं यत् प्रतिदिनं पोषम्=वर्धमानमेव स्यात् न तु क्षीयमाणम्।

गृहपतिः अयमग्निः गृहे रयिपतिः भवति।

**दमूना गृहपतिर्दम आँ अग्निर्भुवद्रयिपती रयीणाम्।** ऋ. 1.60.4

अयं रयीणां पतिः मतिभिः स्तूयते।

**तं त्वा वयं पतिमग्ने रयीणाम् प्र शंसामो मतिभिर्गोतमासः।**

ऋ.1.60.5

अग्निः वाजस्य नाम अन्नस्य ईश्वरो वर्तते। अतः अयं प्रार्थ्यते यत्–

**अस्मे धेहि जातवेदो महि श्रवः।** ऋ.1.79.4

हे जातवेद अग्ने! प्रभूतं श्रवः=अन्नं देहि।

अपरत्र रेवत्=धनयुक्तमन्नम् अस्मभ्यं यथा भवति तथा दीप्यस्व इति प्रार्थितम्।

**रेवदस्मभ्यं पुर्वणीक दीदिहि।** ऋ.1.79.5

देवोऽयं सौभाग्यवर्धकोऽपि विद्यते तद्यथा–

**स त्वमग्ने सौभगत्वस्य विद्वानस्माकमायुः प्रतिरेह देव।**

ऋ.1.94.16

---

1. ऋग्वेदः 1.98.1

हे देव अग्ने! त्वं सौभाग्यं जानन् इह अस्माकमायुः प्रवर्धय।

अयमग्निः पापविनाशकः अतः सः पापनाशाय प्रार्थ्यते।

**अपः नः शोशुचदमघमग्ने शुशुग्ध्या रयिम्** ऋ. 1.97.1

रक्षार्थम् अस्य सर्वव्यापकत्वं स्मर्यते। तद्यथा–

**त्वं हि विश्वतोमुखः विश्वतः परिभूरसि।** ऋ. 1.97.6

त्वं सर्वतो जातः असि, तव गतिः सर्वत्र विद्यते अतः सर्वतः अस्माकं रक्षको भव।

रोगनिवारणाय अयं स्तूयते–

**अग्ने त्वमस्मद्युयोध्यमीवा अनग्नित्रा अभ्यमन्त कृष्टीः** ऋ.1.189.3

एवं केवलं भौतिकजीवनस्य समृद्ध्यर्थं याचितकामनानामेव दाता न वर्तते अपितु अयम् अस्मान् अजस्रैः=अनवरतैः पायुभिः=पालनप्रकारैः पालयेत् इति प्रार्थितम्। एवम् अस्याः देवतायाः कृते **भूयिष्ठां ते नम उक्तिं विधेम ( ऋ. 1.189.1 )** इत्येव वक्तुं शक्यते।

**3. उपसंहारः।**

एवं सकलविवेचनान्तरं एवं वक्तुं शक्यते यत् इयं देवता दानेन दीपनेन द्योतनेन द्युस्थानेन च स्तुतिषु देदीप्यते। मन्त्रगतस्तुतयः प्रार्थनाश्च अस्य देवत्वं पक्षत्रये अपि विस्पष्टयन्ति। एवं यत्काम ऋषिः.. एषा देवतापरीक्षा अत्र केवलं कामनापूर्तये या स्तुतिर्वर्तते तासु अवलोकिता अवबुद्धा च।



# वेदेषु देवतावादः

**डॉ. शैलेन्द्र प्रसाद उनियाल**

सहायकाचार्यः, राष्ट्रियए सं.सं.(मा.वि.वि)

श्रीरघुनाथकीर्तिपरिसरः देवप्रयागः (उत्तराखण्डः)

भारतीय संस्कृतौ वेदाः ज्ञानशेवधित्वेनातिमहत्त्वेन संस्मर्यन्ते। ते च चत्वारो वै वेदाः। ऋग्यजुस्सामाथर्वाभिधाः सुधासुविधाख्यविधिनिषेधादिभिर्मानवानां परमपुरुषार्थ-साधनभूताःपरमपूताश्च सन्तीति प्रतितिर्मे मनसि विलसति। साप्रथमा संस्कृतिर्विश्ववारा[1] विश्वं विपत्तिभिर्वारयतीति विश्ववारा परिभाषामिमां सुबुद्धिमाञ् जगद्गुरुरामभद्राचार्यः विचार्य प्रास्तौत्। वेदेष्वक्षयज्ञानशक्तिं व्यनक्ति भक्तिमान्महान्मनुः- चातुर्वण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक्। भूतं भव्यं भविष्यञ्च सर्ववेदात् प्रसिध्यति[2]।

वेदोऽस्मिन् विपुले ब्रह्माण्डे जागरूकेषु विविधाभिव्यक्तिषु सुप्रकाशशीलः एकोऽचिन्त्यशक्त्याः शाब्दिकोन्मेषविशेष- विग्रहोऽस्ति। तत्तु तर्ककर्कश पद्धतौ व्याख्यान–सिद्धान्तस्य समुच्चयो नास्ति। अपितु प्रातिभ–चक्षुषा साक्षात्कृतानां तत्थ्यानां श्लाघनीयः पुञ्जोऽस्ति। यथा- पुमान् पुमांसं परिपातु विश्वतः[3] न ऋते श्रान्तस्य सख्याय देवाः[4] आत्मपरिश्रमेण विना देवैः सह मैत्री न प्राप्तुं शक्यते। शत हस्तः समाहरमहस्त्रहस्तः संकिर[5] न ऋते श्रान्तस्य सख्याय देवाः[6] आत्मपरिश्रमेण विना देवैः सह मैत्री न प्राप्तुं शक्यते। शत हस्तः समाहरमहस्त्रहस्तः संकिर[7] सहृदयं सामनस्यमविद्वेषं कृणोमि वः।

**अन्योऽन्यमभिनवत वत्सं जातमिवाघ्न्या॥** अथर्व. पिप्पला. 5/19/1

**"यत्र विश्वं भवत्येकनीडम्"** (यजु) इत्येसमादीनि एवंभूतेषु वेदेषु अस्ति यज्ञानां सुदीर्घपरम्परा, श्रौत, स्मार्त्त, मिश्रिता च।

---

1. यजु 7/14
2. मनुस्मति
3. ऋग्. 6/75/14
4. ऋ 4/33/11
5. अथ्व 3/24/4
6. ऋ 4/33/11
7. अथ्व 3/24/4

अथ वेदाहि यज्ञार्थमभिप्रवृत्ताः,[1] इति।

यज्ञो वै विष्णुः[2] प्रजापति वैं यज्ञः[3]।

अग्निर्वै यज्ञः[4] द्रव्यं देवता त्यागः[5] पुरुषो वै यज्ञः[6] बहुषु प्रमाणभूतेषु देवताया महत्वं। कथं निश्चयः स्याद्देवताया इति। अतो वेदेषु धर्मार्थकाममोक्षाणां प्राप्तये विभागद्वयं कल्पितं। अनुष्ठानविषयको विभागः कर्मकाण्डम्। अपरोस्ति दार्शनिको विभागः ज्ञान काण्डम्। उभयत्रास्ति देवतायाः प्राधान्यं।

को देवः इति प्रश्ने समुदिते सति प्राह यास्कः-

देवो दानाद्वा दीपनाद्वा, द्योतनाद्वा[7] देवता, देवशब्दात् स्वार्थे तल्। क्वचित्स्वार्थिका अपि प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते इति भाष्योक्तेः पुंस्त्वातिक्रमेण स्त्रीत्वम्। तथाचाह ऋग्भाष्योपोद्धाते माधवः तथा देवनार्थदिव्यतिधातुनिमित्तो देवशब्द इत्येतदाम्नायते। यस्य यस्य तु मंत्रस्य उद्दिष्टा देवता तु या। तदाकारं भवेत्तस्य देवत्वं देवतोच्यते[8]।। इति

वेदानां प्रथमं परमञ्च प्रामाण्यं सर्वैरेवास्तिकैः स्वीक्रियते। वेदेषु मंत्राः ऋषिभिः स्वकीयैः ब्रह्मचर्यतपोवृत्तिभिः प्रातिभचक्षुर्भिश्च प्रत्यक्षी कृताः, "ऋषयोमंत्रद्रष्टारः" इति भूयोः भूयः प्रथितं शास्त्रेषु। तत्र मंत्रेषु देवतायाः ज्ञानं परमाश्यकं वर्त्तते। यतो हि–छान्दोगा आमनन्ति,

"योहवा अविदितार्षेयच्छन्दोदैवतविनियोगेन ब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा स स्थाणुं वर्च्छति गर्त्तंवा पद्यते प्रमीयते वा पापीयान्भवति"[9]।

महर्षि कात्यायनोऽपि "ऋषिदैवतच्छदांस्यनुक्रमिष्यामः" इत्युक्त्वा एतेषां ज्ञानं विना प्रयोगात्प्रत्यवायः, फलैवैगुण्यं च जायते तथा च सुविज्ञाय तत्फलेन युज्यते। अतोऽवश्यमेवात्र देवता परिज्ञानं साफल्यस्य सूचकः।[10] तथाह–

---

1. आर्यज्योतिषम् 36
2. शतपथ 1/1/2
3. गोपथब्रा पू 2/1/18
4. ताण्ड्यब्रा० 12/5/2
5. का०श्रौ०सू० 1/2/2
6. शतपथ /1/2/4/3/2
7. नि० 7/15/1
8. योगियाज्ञवल्क्यः
9. छां०ब्रा० 3/7/5
10. सर्वानुक्रम सू० 1/1

**बृहद्देवतायाम्-**

**अविदित्वा ऋषिं छन्दोदैवतं योगमेव च।**
**योऽध्यापयेज्जपेद्वापि पापीयाञ्जायते तु सः॥**[1]

निरुक्ते दैवत्काण्डे आचार्यो यास्कः मन्त्रे देवता ज्ञानलक्षणं परिचाययति "यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन्स्तुतिं प्रयुङ्क्ते तद्देवतः स मन्त्रो भवति" एतदेव मन्त्रे देवता लक्षणं। अनेन लक्षणेन सर्वमंत्रेषु देवतोपपरीक्ष्यते[2] क्वचिदनादिष्ट देवता लिङ्गा मंत्रा युज्यन्ते तद्देवता एव ते भवन्ति। यथा-आग्नेयोऽग्निष्टोमे। अग्नष्टोमः अग्नि देवताकः यद्दैवतः स यज्ञो वा यज्ञाङ्गं वा तद्देवता भवन्ति, 'अग्निर्हि भूयिष्ठभाग्देवतानां'। अग्निर्वै सर्वा देवता', यत्र क्वचिन्मन्त्रे देवता चिन्हं नोपलभ्यते तत्राग्निरेव गृह्यते। "अथान्यत्र यज्ञात्प्राजापत्या इति याज्ञिकाः" नाराशंसा इति नैरुक्ताः नाराशंसोऽग्निर्यज्ञो वा इति।

अपि वा कामदेवता स्यात्। यत्र देवतानाविष्कृतः तत्र स्वेच्छया कामतः तस्मिन् देवता कल्पयितव्यः।

याज्ञदैवतो मन्त्र इति। अपि ह्यदेवता देवतावत्स्तूयन्ते यथाश्वप्रभृतीन्योषधिपर्यन्तानि। अश्वादीनि सत्वानि ओषध्यादीनि द्रव्याणि च। अथाप्यष्टौ द्वन्दानि- उलूखलमुसले, हविर्धाने, द्यावापृथिवी, विपाट्शुतुद्र्यौ, आर्त्नी, शुनासीरौ, देवीजोष्ट्री, देवी ऊर्जाहुती इत्यादयः एताः कथं देवताः, तत्समाधीयते। महाभाग्याद्देवताया एक आत्मा बहुधा स्तूयते[3] महैश्वर्यवत्त्वाद्धेतोः एकोऽपि सन् देवतात्मा बहुधा स्तूयते। प्रकृति भेदेन अप्रकृतिभेदेन वा वर्धमानः। यथा निगमो भवतीहैश्वर्यख्यापको देवतायाः। रुपं रुपं वोभवीति मायाः कृण्वानस्तन्वं परिस्वाम्। त्रिर्यद्दिवः परिमुहूर्त्तमागात्स्वैर्मन्त्रैरनृतुपा ऋतावा[4]॥ इति एकस्यात्मनोन्ये देवाः प्रत्यङ्गानि भवन्ति चेतनाचेतनात्वेन तस्यानेकधा विपरिणामः स्थावर जङ्गमभावेन। यथा "द्यौस्ते पृष्ठं पृथिवीशरीरमात्मान्तरिक्षम्" प्रकृति सर्वनाम्न्याच्च यस्मान्महाभाग्या देवता प्रकृतिः। मनुष्य- धर्माद्विपरीतो देवता धर्मः कथमिति ऐश्वर्याद्देवतानाम्। अनैश्वर्यान्मनुष्याणां। यथा-पिता पुत्रं जनयति, इति पिता प्रकृतिः न पुनरिच्छन्नपि पुत्रः पितरं जनयति देवानां तु अग्नेः सूर्योऽजायत। एष प्रातः प्रसुवति अग्निः सूर्यं जनयति तस्मात्सूर्यस्याग्निः प्रकृतिः। सूर्याच्चाग्निः सायंजायते, तस्मादग्नेः सूर्यः प्रकृतिः। अदितेर्दक्षः, दक्षाच्चादितिः। यथा श्रूयते सौरं तेजः सायमग्नि संक्रमते। यथात्र

---

1. बृहददेवता 8/136
2. निरु. 71
3. निरुक्त 7/
4. ऋ० 3/3/20

पतिर्जायां प्रविशति गर्भो भूत्वेह मातरम्। तस्यां पुनर्नवो भूत्वा दशमे मासि जायते।

ताः पुनः सूक्त भाजो हविर्भाजः ऋग्भाजश्च भूयिष्ठाः ताश्च यथा लक्षणं भुवि अन्तरिक्षे दिवि च कल्प्यन्ते तद्यथा परमेष्ठि ग्रहनक्षत्र सर्पलाङ्गल कुसुम्भक प्रभृतीनि काश्चिन्निपातभाजः। निपातो नाम अप्राधान्यं सहि द्विविधः देवान्तरैः सह साधारण्येनोपस्तुताः नैघण्टुकेन च। साधारणं यथा–विधाता धात्रा व्याख्यातः नैघण्टुकेन पृथिवी इत्यादीनि। बृहद्देवतायां सूर्यप्रजापती जङ्गमस्थावराणां भवद्भूतस्य भव्यस्य च कारणमेके मन्वते।[1] अग्निरस्मिन्नथेन्द्रस्तु मध्यतो वायुरेव च। सूर्यो दिविति विज्ञेयास्तिस्त्र एवेह देवताः।।[2] श्लोकेऽत्र निरुक्ते 7.5. षड्गुरुशिष्यभाष्येण सह सर्वानुक्रमणी 2.8 तुलना सुसङ्गता प्रतीयते।

यज्ञ शब्देन विष्णुरुच्यते, यज्ञो वै विष्णुः[3] वेदाहिं यज्ञार्थमभिप्रवृत्ताः कालानु पूर्वा विहिताश्च यज्ञाः। तस्मादिदं कालं विधानशास्त्रं योज्योतिषं वेद सवेद यज्ञान्।[4]

स एष यज्ञः पञ्चविधोऽग्निहोत्रं, दर्श पूर्णमासौ, चातुर्मास्यानि, पशुः सोम इति[5] स्मृतौ तु सप्त पाकयज्ञ संस्थाः औपासनहोमः वैश्वदेवम्, पार्वणम्, अष्टका मासिश्राद्धम्, श्रवणा शूलगव इति। अग्निहोत्रम्, दर्शपूणमासौ, आग्रयणम्, चातुर्मास्यानि, निरूढपशुबन्धः, सौत्रामणी, पिण्डपितृयज्ञादयो दर्वि होमा इति सप्त, सप्तहविर्यज्ञसंस्थाः, अग्निष्टोमः, अत्यग्निष्टोमः, उक्तथ्यः, षोडशी, वाजपेयः अतिरात्रः, अप्तोर्याम इति सप्त सोम संस्थाः[6] इति श्रौतानि मिलित्वा एकविंशतिरुक्तानि। अनन्ता वै वैश्वदेवाः, महाभाग्देवताया एक आत्मा इन्द्रयममातरिश्वाश्विनियज्ञरुद्रसोमवरुणाग्न्यादिबहुधास्तूयतेहूयते च। एकोऽहं बहुस्याम। पुरुषऽएवेदं सर्वम्।[7] ईशावास्यमिदं सर्वम्।[8]

अथ देवतानां स्वरुपाकारप्रकारादिचिन्तनम्–

अथाकार चिन्तनम्, देवतानाम्। पुरुषविधाः स्युरित्येकम्। किमस्ति उत नास्ति? द्विविधाकारिणोऽर्थाः चेतनाश्चाचेतनाश्च तत्र चेतना मनुष्यादयः, अचेतनाश्च पाषाणादयः।

---

1. बृहद्दे.1/61
2. तत्रैव 1/69
3. शतपत
4. आर्चज्यौतिषम्
5. ऐ०ब्रा०
6. गौ०ध० 8/18
7. यजु. 31/2
8. तत्रैव 40/1

तत्र प्रश्नः समुदेति मनुष्यादि वच्चेतना उत पाषाणादिवदचेतनाः अस्योत्तरे– तत्र प्रकाशः पुरुषविग्रहा इत्यर्थः स्पष्टी चकार। ऋष्वा ते इन्द्र स्थविरस्य बाहू [1]यत्संगृभ्णा मघन्वकाशिरित्ते[2] अद्धीन्द्रपिब च प्रस्थितस्य [3]आश्रुत्कर्णश्रुधीहवम्[4] अपुरुषविधाः स्युरित्यपरम्। यथाग्निर्वायुरादित्य पृथिवी चन्द्रमा इति तथा चेतनावद्धि स्तुतयो भवन्तीत्यचेतनान्यप्येवं स्तूयन्ते यथाश्वप्रभृतीन्योषधिपर्यन्तानि। औषधे त्रायस्वैनम्, अभिकन्द्रन्ति हरितेभिरासभिः[5] होतुश्चित्पूर्वे हविरद्यमाशत[6] अपि वोभयविधाः स्युः उभयत्र प्रामाण्यात्। पृथ्व्यादीनां कर्मात्मान एते अपुरुषविधाः क्षितिजलादयः परञ्च अधिष्ठातारः पुरुष विग्रहाः यथा यज्ञोऽश्वमेधादिरधिष्ठातुर्यजमानस्य। मन्त्रार्थदर्शनादेव चर्तुर्विधाः पुरुषविग्रहाः, अपुरुषविग्रहाः, कर्मार्थात्मोभयविध्यम्, नित्यमौभयविध्यम्, महाभाग्येसत्यैश्वर्यात्। एवं सूक्त भाजः हविर्भाजः ऋग्भाजश्च भूयिष्ठा काश्चिन्निपातभाजः महाभारते एष एव सिद्धान्त प्रदर्शितः। पृथ्वी स्त्रीरुपेण भारावतारणाय ब्रह्माणं ययाचे। अग्निश्च ब्राह्मण रुपेण वासुदेवार्जुनावुभौ खाण्डवं ययाचे, पुरुषेणाग्निरुपेण खाण्डवं ददाह इति।

अथ देवतानां संख्यावादः—शतपथब्राह्मणान्तर्गते चतुर्दशकाण्डे तृतीये प्रपाठके सप्तमे शाकल्य ब्राह्मणे[7] विदग्धद शाकल्यो याज्ञवल्क्यं पप्रच्छ। स वै ज्ञवल्क्यः यावत्संख्याका देवाः निविदि उच्च्यन्ते तान्प्रति पादयन्नाह, निविन्मात्रे देवता संख्यावाचकानि मंत्र पदानि कानि चित्, वैश्वदेवे शस्त्रे शस्यन्ते तानि निवित्संज्ञकानि मंत्रपदानि दर्शयति त्रयश्च त्री च शतेति। त्रयश्च देवाः, देवानां त्रीणि च शतानि पुनरप्येवं त्रयश्च त्री च सहस्त्रेति, त्रीणिसहस्राणित्र्यधिकानि त्रयस्त्रिंशदिति अष्टौ वसवः एकादश रुद्राः द्वादशादित्याः इन्द्रश्चप्रजापतिश्च। 3306 त्रयश्च त्री च सहस्त्रेति देवनार्थदीव्यतिधातुनिमित्तो देवशब्द इत्येतदाम्नायते। देवनाद्वैदेवोऽभूदिति तद्देवानां देवत्वमिति। अतो दीव्यतीति देवः मन्त्रेण द्योत्यत इत्यर्थः। यस्य यस्य तु मन्त्रस्य उद्दिष्टा देवता तु या। तदाकारं भवेत्तस्य देवत्वं देवतोच्यते। योगियाज्ञ०। वैदिकमन्त्रभेदे देवता– भेदाः सर्वानुक्रमणिकायामुक्तास्ततएवावधेयाः। तन्मूलं हेमा० ब्र०ख० उक्तमिह विस्तरभयानोद्धृतम्। मन्त्राणां तज्ज्ञाने फलमज्ञाने निन्दामाह हेमा०ब्र० योगियाज्ञ– "आर्षं छन्दो दैवतञ्च विनियोगस्तथैव च। वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः। अविदित्वा तु यः कुर्याद् यजनाध्ययनं जपम्। होममन्तर्जले दानं

1. ऋग्वेद 6/47/8
2. ऋग्वेद 3/30/15
3. ऋग्वेद 10/116/7
4. ऋग्वेद 10/116/7
5. ऋग्वेद 10/94/2
6. ऋ 10/94/2
7. शतपथ 14/3/7/1–3

तस्य चाल्पफलं भवेत्। तथा यो विजानाति मन्त्राणामार्षं छन्दश्च दैवतम्। विनियोगं व्राह्मणञ्च मन्त्रार्थं ज्ञानकर्म च। एकैकस्य ऋषेः सोऽपि वन्द्योह्यतिथिवद्भवेत्। देवतायाश्च सायुज्यं गच्छत्यत्र न संशयः। पूर्वोक्तेन प्रकारेण ऋष्यादीन् वेत्ति यो द्विजः। अधिकारो भवेत्तस्य रहस्यादिषु कर्मसु। ब्राह्मणेन मन्त्रेतरवेदभागेन सह वेदितव्यमित्यर्थः उत्तरत्र विनियोगव्राह्मणयोर्ज्ञेयतया निर्देशात्। तन्निरुक्तिरपि तेनैवोत्तरत्र दर्शिता यथा– नैरुक्त्यं यस्य मन्त्रस्य विनियोगः प्रयोजनम्। प्रतिष्ठानं स्तुतिश्चौव ब्राह्मणं तदिहोच्यते। एवं पञ्चविधं योगं जपकाले ह्यनुस्मरेत्। होमे चान्त– र्जले योगे स्वाध्याये यजने तथा। देवताभेदाश्च निरुक्ते दैवतकाण्डे उक्ता यथा– अग्न्यादिदेवपत्न्यन्तं देवताकाण्डमुच्यते। वाय्वादयो भगान्ताः स्युरन्तरिक्षस्थदेवताः। सूर्य्यादिदेवपत्न्यन्ता द्युस्थाना देवता इति। त्रयस्त्रिंशत्पतिशब्दे 3359 पृ० देवतानां प्राधान्यतस्त्रयस्त्रिं शत्त्वमुक्तं किन्तु स्वस्वगण– पत्नीसहितानां तासां त्रयस्त्रिंशत्कोटिसंख्यात्वं यथोक्तं पद्मपु० उत्तरख० सदारा विबुधाः सर्वे स्वानां स्वानां गणैः सह। त्रैलोक्ये ते त्रयस्त्रिंशत्कोटिसंख्यतयाऽभवन्। तेषां गणभेदाश्च गणदेवताशब्दे 2502 पृ० उक्ताः दृश्याः। तन्मध्येऽधिकारिभेदेन देवताभेदा यथा या यस्याभिमता पुंसः सा हि तस्यैव देवता। किन्तु कार्य विशेषेण पूजिता चेष्टदा नृणाम्। विशेषात् सर्वदा नायं नियमोह्यन्यथा नृप!। नृपाणां दैवतं विष्णुस्तथैव च पुरन्दरः। विप्राणामग्निरादित्यो ब्रह्मा चौव पिनाक– धृक्। देवानां दैवतं विष्णुर्दानवानां त्रिशूलभृत्। गन्धर्वाणां तथा सोमो यक्षाणामपि कथ्यते। बिद्याधराणां वाग्देवी साध्यानां भगवान् हरिः। रक्षसां शङ्करो रुद्रः किन्नराणाञ्च पार्वती। ऋषीणां दैवतं व्रह्मा महादेवश्च क्षूलभृत्। मनूनां स्यादुमा देवी तथा विष्णुः समास्करः। गृहस्थानाञ्च सर्वे स्युर्ब्रह्मा वै ब्रह्मचारिणाम्। वैखानसस्याम्बिका स्याद् यतीनाञ्ज महेश्वरः। नतानां भगवान् रुद्रः कुष्माण्डानां विनायकः। सर्वेषां भगवान् ब्रह्मा देवदेवः प्रजापतिः। इत्येवं भग– वान् व्रह्मा स्वयं देवोऽभ्यभावत इति कूर्म० पु०। देवानां वर्णभेदा भा० शा० मोक्षधर्मे। आदित्याः क्षत्रियास्तेषां विशश्च मरुतस्तथा। अश्विनौ च स्मृतौ शूद्रौ तपस्युग्रे समास्थितौ। स्मृतास्त्वाङ्गि रसा देवा ब्राह्मणा इति निश्चयः। इत्येतत् सर्वदेवानां चातुर्वर्ण्यं प्रकीर्तितम्। वैष्णवानां गणेशाद्यनन्तरं सनकादिवैष्णवानां पूज्यत्वेन देवतात्वमुक्तं यथा– यत्र यत्र सुराः पूज्या गणेशाद्यास्तु कर्मिणाम्। विष्ण्वर्चने तत्र तत्र वैष्णवानां हि वैष्णवाः। विश्वक् सेनं ससनकं सनातनमतःपरम्। सनन्दं सनत्कुमा– रञ्च पञ्चौवं पूजयेत्ततः पद्म० उत्तरख०। देवषट्कं यथा– गणेशञ्च दिनेशञ्च वह्निं विष्णुं शिवं शिवाम्। देवषट्कञ्च संपूज्य नमस्कृत्य विचक्षणः। ब्रह्म० वै० प्रकृ०। मासविशेषे देवतामेदपूजा मन्त्रमहोदधावुक्ता यथा– अन्येष्वप्युपरागार्द्धोदययाम्यायनादिषु। कुर्यादल– भ्ययोगेषु विशेषाद्देवतार्चनम्। यथा यथेष्टदेवेषु नृणां भक्तिः समेधते। प्राप्यते तैरयत्नेन मनोऽभीष्टं तथा तथा। शुचौ तत्तदहे कुर्याद्देवप्रस्वपनोत्सवम्। ऊर्जे तथैव देवानामुत्थापनविधिं सुधीः। माघकृष्णचतुर्दश्यां विशेषाच्छिवपूजनम्। आश्विनाद्यनवाहेषु दुर्गा पूज्या यथाविधि।

गोपालं पूजयेद्विद्वान्नभः कृष्णाष्टमीदिने। रामं चौत्रे सिते पक्षे नवम्यामर्चयेत् सुधीः। वैशाखाद्य चतुर्दश्यां नरसिंहं प्रपूजयेत्। यजेच्छुक्लचतुर्थ्यान्तु गणेशं भाद्रमाघयोः। महालक्ष्मीं यजेद्विद्वान् भाद्र कृष्णाष्टमीदिने। माघस्य शुक्लसप्तम्यां विशेषाद्दिनभा- यकम्। या काचित् सप्तमी शुक्ला रविवारयुता यदि। तस्यां दिनेशं संपूज्य दद्यादर्घ्यं पुरोदितम्। तत्तत्- कल्पोदितानन्यान् देवताप्रीतिवर्द्धनान्। विशेषनिग्रमान् कृत्वा भजेद्देवमनन्यधीः। आषाढीकार्त्तिकीमध्ये किञ्चिन्नियममाचरेत्। देवसम्प्रीतये विद्वान् जप पूजादितत्परः। एवं यो भजते विष्णुं रुद्रं दुर्गां गणाधिपम्। भास्करं श्रद्धया नित्यं स कदाचिन्न सीदति। देशनादेशितचतुर्थ्यन्तपदनिर्देश्यत्वं देवतात्वम् अग्नये स्वाहेत्यादिमन्त्रएव देवतेति मीमांसकाः। तन्मतञ्च पूर्वपक्षविधया शब्दचि० उक्ता दूषितं तच्च अविग्रहशब्दे 456 पृ० दर्शितम्। देवतानां चौतन्ये विग्रहवत्वे वा मन्त्राणामेव देवतात्वं श्राद्धवि० समर्थितं यथा- विग्रहवत्वं चेन्द्रादीनामपि तिर्यगधिकरणे दर्शितं देत- तात्वं हि तथाविधानां नेष्टमिति। नन्विन्द्रादीनां विग्रहवत्त्वे किं प्रमाणम्। अर्थवाद इति चेन्न तस्य सिद्धेऽर्थेऽप्रामाण्यात्। कथं वा विग्रहवतामदेवतात्वम् ऐन्द्रं हविरित्यादौ तद्धितादिभिः प्रकृत्यर्थस्य देवतात्वबोधनात् इन्द्रादिपदानि च सहस्रचक्षुरादिमतीषु व्यक्तिषु मुख्यानि मन्त्रपरत्वे लक्षणाप्रसङ्गात्। उच्यते ऐन्द्रादिपदकामाधिकारिकविधिवाक्यस्थकामिश्रुतिरत्र प्रमाणम् अन्यथा स्वर्गिशरोरेऽप्यनाश्वासः स्यात्। यत्राप्यर्थवादादैन्द्रादिपदप्राप्त्यवगतिः तत्रापि तत्फलपरत्वे रात्रिसत्रन्यायएव प्रमाणं विग्रहवतामिन्द्रादीनां सन्निधानस्य प्रत्यक्षबाधितत्वेन तथाविधानां पूज्यत्वासम्भवात् अगत्या तदाकारतया ध्यातस्य मन्त्रस्य लक्षितस्य देवतात्वमिति रहस्यम्। इन्द्राकारतया ध्यानादिन्द्रप्रीतिरभ्युपपन्ना। तथा च योगियाज्ञवल्क्यः यस्य यस्य तु मन्त्रस्य उद्दिष्टा या च देवता। तदाकारं भवेत्तस्य देवत्वं देवतोच्यते इति। ननु देवानां विग्रहवत्त्वे तेषामेवाराधितानां फलदातृत्वं कुतो न भवेत् अलमपूर्वकल्पनया। तथा च भविष्यपुराणे यद्यद्द्रव्यं नरोऽमृष्टमादित्याय प्रयच्छति। तत्तस्य शतसाहस्रमुत्पादयति भास्करः। याज्ञवल्क्यः- आयुः पूजां घनं विद्यां स्वर्गं मोक्षं सुखानि च। प्रयच्छन्ति तथा राज्यं प्रीता नृणां पितामहाः। तथा च देवताधिमरणसिद्धान्तविरोधः स्यात्। उच्यते देवानामिन्द्रादीनां पितघ्णां वस्वादीनां युगमन्वन्तरादिभेदेन नानात्वावगमात् फलोदयकाले पूर्वस्य च्युताधिकारत्वेन फलदातृत्वाशक्तेः। अन्यस्य चानाराधितत्वेन फलदातृत्वायोगात् तत्रापूर्वे शब्दशक्तौ वाचकशब्दसद्भावात् सर्वत्रैव तदभिधानम् अतएव काम्ये कघ्प्तशक्तिर्लिङादिर्नित्ये निषेधे चापूर्वमाहेत्युक्तम्। एवञ्चापूर्बानुप्रवेशात् सहकारितया यदि देवतापि फलदात्री न क्वचित् कोऽपि विरोधः। पद्मपुराणे उत्तरखण्डे स्वस्वगण पत्नी सहितानां तासां त्रयस्त्रिंशत् कोटि संख्यात्वं प्रोक्तम् सदारा विबुधाः सर्वे स्वानां स्वानां गणैः सह त्रैलोक्येते त्रयस्त्रिंशत्कोटि संख्यतयाभवन् या यस्याभिमता पुंस सा हि तस्यैव देवता किन्तु कार्य विशेषेण पूजिता चेष्टा नृणाम् विशेषात् सर्वदा नायं नियमो ह्यन्यथा नृप नृपाणां दैवतं विष्णुस्तथैव च

पुरन्दरः विप्राणामग्निरादित्यो ब्रह्मा चौव पिनाक धृक् देवानां दैवतं विष्णुर्दानवानां त्रिशूलभृत् गन्धर्वाणां तथा सोमो यक्षाणामपि कथ्यते विद्याधराणां वाग्देवी साध्यानां भगवान् हरिः रक्षसां शंकरो रुद्रः किन्नराणां च पार्वती ऋषीणां दैवतं ब्रह्मा महादेवश्चशूलभृत् मनूनां स्यादुमा देवी तथा विष्णुः सभास्करः गृहस्थानां सर्वे स्युर्ब्रह्मा वै ब्रह्मचारिणाम् वैखानस्याम्बिका स्यात् यतीनां च महेश्वरः नटानां भगवान् रुद्रः कूष्माण्डानां विनायकः सर्वेषां भगवान् ब्रह्मा देव देवः प्रजापतिः इत्येवं भगवान् ब्रह्मा स्वयं देवोऽभ्यभाषत अत्रकोटि शब्दः स्पष्टतया संख्या व्याख्याति अतः त्रयस्त्रिंशत्कोटि संख्यका देवताः सन्ति नात्र संशीतिभीतिः उपपादनीया।



# ईशावास्योपनिषदि दार्शनिकसामाजिकंचिन्तनम्

**शोधच्छात्रः- कुणालभारद्वाजः ( वेदविभागः )**

श्रीला.ब.शा.राष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली

**वेदानां महत्त्वम्-**

अखिलज्ञानाधारभूताः वेदा एव वैश्विकदार्शनिकचिन्तनस्य प्रथमद्योतकाः सन्ति। वेदेषु नानास्थलेषु दार्शनिकविचाराणां प्रत्यक्षरूपेण साङ्ख्ययोगाद्वैतादीनां सिद्धान्तानां सूत्राणां च वर्णनं मन्त्रेषु सर्वत्रोपलभ्यते।

बृहदारण्यकोपनिषदि साङ्ख्यसम्मतपञ्चविंशतितत्त्वानां विवेचनम् एवमस्ति-

**"यस्मिन् पञ्चपञ्चजना आकाशश्च प्रतिष्ठिता**
**तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम्।"**[1]

अस्यां श्रुतौ पञ्चपञ्चकाः पञ्चविंशतितत्त्वार्थं प्रयुज्यते। एतेषां पञ्चविंशतितत्त्वानां साङ्ख्यशास्त्रे प्रधानादिक्रमेणोपस्थितिः वर्त्तते।

**साङ्ख्यकारिकायामेवं प्रोक्तम् -**

**मूलप्रकृतिरविकृतिर्महदाद्यः प्रकृतिविकृतयः सप्त।**
**षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः॥**[2]

यौगिकसिद्धान्तेषु **"योगश्चित्तवृत्तिनिरोधः"**[3] इति। चित्तवृत्तीनां निरोधविषये कठोपनिषदि उक्तं यथा -

**आत्मानं रथिनं विद्धि शरीरं रथमेव तु।**
**बुद्धिं सारथिं विद्धि मनः प्रग्रहमेव च॥**

**इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्।**
**आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः॥**[4]

---

1. बृ. उ. 4/4/17
2. सा. का. 3
3. योगसूत्र 1/1
4. कठ. 1/3,4

ये अविवेकिनः पुरुषास्ते सर्वदा भोगेषु आसक्ताः सन्ति ते कामभोगादिषु संल्लिप्य आत्मानं क्लेश्यन्ते तथा ये विवेकिनस्ते सदैव युक्तेन मनसा भवन्ति। तेषाम् इन्द्रियाणि सदश्वा इव बुद्धिः सारथिरिव गन्तव्यं प्रतिनयतीति।

आचार्यसदानन्देन सृष्टेरुत्पत्तिक्रमविषये उक्तमेतद्-

**तमःप्रधानविक्षेपशक्तिमदज्ञानोपहितचौतन्यादाकाश आकाशाद्वायुर्वायोरग्नि-रग्नेरापोऽद्भ्यः पृथिवी चोपपद्यते।**[1]

**तैत्तिरीयोपनिषदि एवमुक्तम्-**

**"तस्माद्वा एतस्मादात्मनः आकाशसम्भूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी"**[2] इति। अनेन कारणेनोक्तं **"वेदान्तो नाम उपनिषत्प्रमाणम्"**[3] इति।

मीमांसासकानां मते पञ्चविधवेदाः। विधिमन्त्रनामधेयनिषेधार्थवादभेदात्।अस्मिन् मीमांसाशास्त्रे धर्मविवेकाय भगवता जैमिनिना वेदार्थपरिज्ञानाय वाक्यार्थविचाराय च यागेषु मन्त्राणां क्रमविनियोगादीनां विषये विधिभागमाश्रित्य मीमांसासूत्रेषु वाक्यार्थविचारं निरूप्यते। एतदर्थं समस्तज्ञानराशिर्वेद इति मन्यते।

**उपनिषद्वाङ्मयः-**

उपनिषच्छब्दस्य निष्पत्तिस्तु **"सदेर्धातोःविशरणगत्यवसानार्थस्योपनिपर्वस्य क्विप्प्रत्ययान्तस्य रूपमुपनिषदिति"**।[4]

उपनिषच्छब्दस्यार्थविषये **"अविद्यादेः संसारबीजस्यविषरणाद् विनाशाद्.... परं ब्रह्म वा गमयतीति ब्रह्मगमयितृत्त्वेन योगाद्....गर्भवासजन्मजराद्युपद्रववृन्दस्य लोकान्तरे पौनः पुण्येन प्रवृत्तस्य अवसादयितृत्त्वेन वा....ब्रह्मविद्योपनिषद्।**[5] अत्र विशरणशब्दस्यार्थोऽयं सांसारिकज्ञानविरोधीभावरूपजनितानां सम्प्रत्ययानां विनाशनम्। उपनिषच्छब्देन सा विद्या प्रतिपादिता यया मनुष्याः सत्यमाप्नुवन्ति बन्धनान्मुच्यन्ते। यया विद्यया जीवो ब्रह्म प्रतिगच्छति सा ब्रह्मविद्या उपनिषदिति। अवसादो नाम शैथिल्यभावो यत्र जीवकतृककर्मणां क्षयकरणं भवति।

**इशोपनिषदः व्यवहारिकसामाजिकदृष्ट्या विवेचनम्-**

शुक्लयजुर्वेदे अन्तिमेऽध्याये उपदिष्टमन्त्रा "ईशावास्योपनिषद्" इति नाम्ना प्रख्याताः।

1. वेदान्तसार पृष्ठ 34
2. तैत. उप. 2/2
3. वेदान्तसारपृष्ठ 2
4. कठ. शाङ्करभाष्य
5. कठ. शाङ्करभाष्य

उपनिषदियं **"ईशावास्यमिदं सर्वम्"**[1] इत्यनेन मन्त्रेणारम्भत्वाद् अस्याः उपनिषद इदं नाम। उपनिषदियं सर्वासु उपनिषत्सु प्राथम्येन परिगण्यते। यतो हि उपनिषदियं न केवलम् उपनिषन्मात्रमस्ति अपितु मौलिकसंहिताभागोऽपि वर्त्तते। अस्यां माध्यन्दिनशाखायां सप्तदशमन्त्राः सन्ति परञ्च काण्वशाखायाम् एकोऽधिकः प्राप्यते। एनाम् उपनिषदमधि कृत्य शाङ्करभाष्यम् उव्वटभाष्यं च मुख्ये स्तः। अस्यामुपनिषदि उपनिषभाष्येषु च आध्यातमं तु अस्त्येव तथा च नैतिकसामाजिकमनोवैज्ञानिकसूत्राणि अपि सन्ति।

वेदेषु विषयदृष्ट्या कर्मज्ञानोपासनाभेदेन त्रैविध्यं विभजते। विश्वस्य कारणरूपब्रह्मणः परमतत्त्वस्य विवेचनमत्र ज्ञानकाण्डभागेषु उपनिषत्सु कृतम्।

कर्मोपासनयोः लक्ष्यं परमतत्त्वप्राप्तिकरणे मनुष्येषु योग्यतासम्पादनम् एव। कर्मोपासनासाधनरूपा ज्ञानं तु साध्यं वर्त्तते। उपनिषदां मुख्योद्देश्यम् आत्मज्ञानेन मोक्षप्राप्तिः।

उपनिषद्भागास्तु सकलनैतिकदार्शनिकचिन्तस्य मूलाधाराः। अस्यामुपनिषद्युपरि बहुभिराचार्यैः भाष्याणि कृतानि। तेषु भाष्यग्रन्थेषु स्वस्वकामानाम् अर्थानां च दोहनं च कृतम्।

अत्र आद्येन मन्त्रेण सर्वकामानां परित्यागेन ज्ञाननिष्ठा उक्ता।

अत्र प्रथममन्त्रः-

**ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्।**
**तेनत्यक्तेन भुञ्जीथाः मा गृधः कस्यस्विद्धनम्॥**[2]

अत्र प्रथमे मन्त्रे परद्रव्येषु आकाङ्क्षायाः निषेधोपदिष्टः।

अज्ञानां जिजिविषूणां ज्ञाननिष्ठासम्भवे **"कुर्वन्नेवेह कर्माणि जिजिविषेत्"**[3] इत्यनेन मन्त्रेण कर्मनिष्ठा विहिता।

अस्मिन्नेव उपनिषद्भागे सम्पूर्णवेदान्तदर्शनसम्बद्धसिद्धान्तानां साररूपेण निरूपणं मिलति। अस्याम् उपनिषदि सामाजिकावश्यकतां व्यावहारिकज्ञानापेक्षामपि स्वीकृत्य निस्वार्थरूपेण निष्कामभावनया कर्मानुष्ठानस्य प्रतिपादनं कृतम्। येन समुचितव्यावहारिक-व्यवस्था सम्पद्यते।

नैतिकमूल्यानामभिवृद्ध्यर्थम् अस्यामेव उपनिषदि अनेकसूत्राणि प्रदत्तानि येन मनुष्येषु मानवीयमूल्यानां सम्पादनं सम्यक्तया भवतीति।

तृतीये मन्त्रे अज्ञानिनां निन्दा प्राप्यते येन जनाः ज्ञानप्राप्त्यर्थं प्रवृत्ताः भवेयुः। तत्रैव

---

1. शु.य. 40/1
2. शु. य. 40/1
3. शु. य. 40/2

आत्महनां निन्दा अपि वर्त्तते ये भ्रष्टाचारे रता: सन्ति नास्तिका: अनैतिकाचारपरा: तेषां पारलौकिकी अधोगतिर्भवति इह लोके तु कारावासादिषु सन्तप्ता: भवन्ति इत्यभिप्राय:। तेऽपि आत्महन: ये कर्त्तव्यात् सङ्घर्षाच्च पलायन्ते आत्महत्यामाचरन्त इति भाव:। षष्ठे सप्तमे च आत्मभावनया सर्वत्र दर्शनोपदेशो वर्त्तते। सर्वेषु प्राणिषु परमात्मभावनया दर्शनीयं येन केनचित् सह अन्यायो न भवेदिति। अन्यत्र अपि उक्तम्–**"मित्रस्य चक्षुषा समीक्षामहे।"**[1] इति श्रुते:। तस्यां स्थितौ न शौको भवति न मोहश्च इति श्रुत्यभिप्राय इति।

**निष्कर्ष:-**

श्रीमद्भगवद्गीतायां प्राध्यान्येन प्रतिपादितविषयस्य निष्कामकर्मयौगस्य मूलसूत्रमपि इशोपनिषदि प्राप्यते।

**कुर्वन्नेवेह कर्माणि जिजीविषेच्छतः समा:।**
**एवन्त्वयिनान्यथेतोऽस्ति न कर्मलिप्यते नरे॥**[2]

विश्वबन्धुत्वोपदेशोऽपि इशोपनिषदि उपलभ्यते।

**यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति।**
**सर्वभूतेषु चात्मानं ततो न विचिकित्सति॥**[3]

ज्ञानकर्मसमुच्चयेन दु:खनिवर्तनोपदेशश्च अस्यामुपनिषदि प्रतिपादित:।

**अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते॥**[4]

एतदर्थम् इशोपनिषद: विभिन्नपक्षेषु सुखसम्पादनाय उत्कृष्टसमाजस्य व्यवस्थापनस्य च इशोपनिषदि वर्णितमन्त्राणां महत्त्वं अस्माभि: दृश्यते।

अतो विभिन्नधार्मिकनैतिकसामाजिकमनोवैज्ञानिकसन्दर्भेषु अस्या: उपादेयता निर्विवादेन सिद्ध्यति मे मति:।



1. शु. य. 36/18
2. शु. य. 40/2
3. शु. य. 40/6
4. शु. य. 40/14